# संस्कृतवाङ्मये स्फोटसिद्धान्त

(संस्कृतवाङ्मय में स्फोटसिद्धान्त)

इलाहाबाद विश्वविद्यालयस्य डी० फिल् इत्युपाधेः प्राप्तये

प्रस्तुत

**शोधप्रबन्धः**


अनुसन्धाता

***बलबहादुरत्रिपाठी***

एम० ए०





निर्देशकः

***प्रो० डॉ० सुरेशचन्द्रश्रीवास्तव्यः***

अध्यक्ष :

संस्कृत-विभागस्य

**इलाहाबादविश्वविद्यालयस्य**


मकरसंक्रान्तिः
२०४५ वैक्रमीयः सवत्सरः] [इलाहाबादः

शब्दब्रह्मणे नमः

सूक्ष्मप्रेक्षाप्रकाशस्फुटतरजटिलन्यायशाब्दादिशास्त्र-

तत्त्वग्रन्थिस्वरूपं बुधजननिचयैर्गीतकीर्तिप्रभावम् ।

शिष्यैरासेव्यमानं सततमवितथज्ञाननिर्भ्रान्तमेधैः,

श्रीवास्तव्यं सुरेशं गुरुवरमनिशं सत्यनिष्ठं नमामि ॥

नीहारहारघनसारसुधाकराभां
विद्युत्प्रभामखिलवाङ्मयसृष्टिहेतुम् ।
आधारचक्रनिलयां चलचित्कलां तां
स्फोटात्मिकाममलवाचमहं प्रपद्ये ।।

यद्यपि व्याकरणशास्त्रमिदं शब्दसाधुत्वान्वाख्यानपरकमेव तथापि निखिलस्यापि चिदचिदात्मनो जगतोऽधिष्ठानभूतं परमार्थतो निरस्ताधिष्ठिताधिष्ठानभेदम्, अनाद्यविद्योपचरितज्ञातृज्ञेयव्याख्यातृव्याख्येयादिविभ्रमं स्वज्ञानेनोपशान्तसकलजिज्ञासम्, स्वाधिगमोपरमितान्याधिगमाभिलाषं प्राप्यान्तरपर्यवसानं, परमपुरुषार्थभूतं, सूक्ष्मचिन्तनेनाप्यचिन्त्यस्वरूपवैशिष्ट्यम्, अत एवातिक्रान्तवाग्विभवव्यपदेशम्, अभेदानुभूतिमात्रावगाह्यं शब्दात्मकं परमं तत्त्वम् अनावृतयथार्थस्वरूपं विधातुं प्रवृत्तप्रपञ्चं भवति। वैयाकरणास्तावत् तदेवैकं सम्यग् ज्ञात्वा विज्ञातसकलविज्ञातव्या अवाप्तलौकिकस्वार्गिककामा वस्तुतोऽकामिनो बुभूषवो विहितस्वशास्त्रारम्भा दरीदृश्यन्ते।

एवं भारतीयदर्शनान्तराणामिव परमार्थसाधनैकलक्ष्यतावच्छेदकत्वं व्याकरणदर्शनस्यापीति नितरां निर्भ्रान्तं मतमुदेति। तदुक्तम्

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ,
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्,
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।

वैदिकादेव कालादारभ्य शब्दतत्त्वस्य दार्शनिकविवेचनं क्रियमाणमस्ति। "चत्वारि श्रृङ्गा त्रयोऽस्य पादाः, चत्वारि वाक्परिमिता पदानि, उत त्वः पश्यन् न ददर्श वाचम्, सक्तुमिव तितउना पुनन्तो, वागेव विश्वा भुवनानि जज्ञे, ओमित्येतदक्षरमिदं सर्वमित्यादीनि वेदब्राह्मणादिषु समुपलभ्यमानानि मन्त्ररूपाणि वचनानि श्रौताधारभूतानि सन्ति व्याकरणदर्शनस्य। परवर्तिनो व्याकरणतत्त्वमर्मज्ञाः वेदादावतिसूक्ष्मावस्थापन्नानि विचारजातान्याधारीकृत्य स्वदर्शनप्रासादं दृढतरतर्क-प्रतिष्ठाकुण्ठितप्रतिवादितर्कप्रहारं विरचयाञ्चक्रुः। शब्दतत्त्वस्वरूप-निरूपकं दर्शनमिदं महर्षेः पाणिनेरारभ्याचार्यनागेशभट्टं यावत् क्रमशो विनिर्मित-समग्रकलेवरमभूत्। यद् आचार्यनागेशभट्टस्य यथार्थज्ञानप्रकाशमञ्जूषाया वैयाकरणसिद्धान्त-लघुमञ्जूषाया अध्ययनसमय एव ममाकर्षणविषयतामयात्। परिवर्धितजिज्ञासोऽहं नैजेनात्यल्पबुद्धिविभवप्लवेन महर्षीणां विचारपारावारं प्रतिक्षणमुत्पन्न-गाढाकौतुकं गमनानन्दमधिजिगमिषुः समभवम्। मन्ये सकलाधारभूताच्छब्दतत्त्वात् सृष्टेरतात्त्विको भेदः तत्स्वरूपावगत्यै मादृशान् समारब्धव्यापारान् विधत्ते— "नहि सर्वथासम्बद्धं प्रति दृष्टा कस्यचिज्जनस्य प्रवृत्तिः"।

अतस्तत्र प्रथमं प्रबन्धस्यास्य गौरववर्धनाय, शुद्धतासम्पादनाय विमलविचारनिबन्धाय च यैः भूयान् प्रयत्न आचरितः भूयोभूयश्चाकृतिमस्नेहेनोद्बोधितोऽस्मि, येषाञ्च सफलनिर्देशने शोधप्रबन्धोऽयं प्रस्तूयते, तेषां शाब्दन्यायाद्यनेकशास्त्रावगाहननिर्मलधियां, प्राच्यप्रतीच्यदर्शनाचार्याणां, समासादितपाठनपाटवानां प्रशासननिष्णातानां संस्कृत-

विभागाध्यक्षपदं भूषयतां श्रीमतां प्रो० डॉ० सुरेशचन्द्रश्रीवास्तव्यानां भूयांसमुपकारं स्तुतिकुसुमाञ्जलिभिः समर्चयामि ।

प्रसङ्गेऽस्मिन् भारतीयसंस्कृतिसंरक्षणतत्पराणां दयादाक्षिण्यादिप्रतिमूर्तीनाम् अभिनवपरमार्थभूषणोपाधिविभूषितवतां प्रयागस्थश्रीवैष्णवाश्रमस्य कुलपतिपदमधिष्ठितवतामाचार्यपादानां महन्त-श्रीसीतारामाचार्याणां दयादृष्टिं कथङ्कारं विस्मर्तुं शक्नुयाम्, यैः पदे पदे समापतितान् विविधविधान् बाधान् सम्बाध्य समुचितेन सौविध्येन ममोपकृतम्, सम्प्रत्यपि च तदाश्रमशरणोऽस्मि ।

निश्चितमेव एतादृशोऽतिगहनविचारार्णवो बहुशास्त्रावगाहनप्राप्तपाटवेन पारोन्मुखसत्पथप्रदर्शकेन गुरुसांयात्रिकेण विना सर्वथैवाचिन्त्य प्रवेशो भवति । अतः तद्रूपाणां तत्र भवतामनवद्यविद्याविद्योतितान्तःकरणानाम् अप्रतिमप्रतिभामण्डितानाम् नगदनेकशिष्यपरिवृतानां श्रीरामदेशिक-संस्कृतमहाविद्यालयस्य व्याकरण-विभागाध्यक्षपदमलङ्कुर्वाणानाम् डॉ० मधुकरफाटकमहाभागानां पादपद्मयोः नतिकृतज्ञतामुपहरामि, यैः महता स्नेहेन प्रयत्नेन च बाल्यकालत एव प्रपाठितोऽस्मि, येभ्यश्च कमपि बोधलवमासाद्य सामीक्षकं शोधप्रबन्धममुं निबन्धुं कृतसाहसोऽभूवम् । अत्रैव च प्रगाढपाण्डित्यैकाधारान् विनीतानेकान्तेवासिमण्डितान् श्रीरामदेशिकसंस्कृत-महाविद्यालयस्य साहित्यविभागाध्यक्षपदाधिष्ठितान् साहित्यार्णवनिमज्जनजनितानन्दान् श्रीशिवनाथद्विवेदिचरणान्, अथ च तपोवृत्तः सहृदयान् श्रीवैष्णवाश्रमस्याधिकारिणः संस्कृतमहाविद्यालयस्य च प्रधानाचार्यान् डॉ० सनत्कुमारत्रिपाठिनः कृतज्ञताशतैरभ्यर्चये, यैरजस्रनिसर्गवात्सल्यनिर्भरेण गभीरेण स्नेहेन संवर्धितोऽभूवम् ।

शोधसम्पादनतत्परस्य प्रयागस्थगङ्गानाथझा-केन्द्रीयसंस्कृत-विद्यापीठस्य प्राचार्याणां, विश्वविश्रुतयशसां विविधविद्यासमीक्षाधिगतधीवैशद्यानाम् अभिलाषा-वाप्तशुभङ्करसामर्थ्यानां, सुमनसां, तत्र भवतां डॉ० गयाचरणत्रिपाठिनां साहाय्य-मुद्बोधनञ्चानेकैः धन्यवादैः सत्करोमि।

अपि च इलाहाबादविश्वविद्यालये प्रवक्तृपदगौरवमण्डितानां पण्डितश्लाघितानां विशिष्टाद्वैतवादविवेचनविचक्षणानां डॉ० रामकिशोरशास्त्रिणां प्रोत्साहनं हृदयेनावधारयामि।

जगत्यस्मिन् प्रायेण सहयोगिसाध्यानि भवन्ति सर्वाणि कार्यजातानि, अत एव शास्त्रोदिष्टाचरणनिष्ठानां सततं सत्कार्यप्रेरणाजस्रस्रोतीभूतानां तपःपरिपूतानाम् पितृपादानां श्रीशिवदयालत्रिपाठिनामथ च सामान्यजनोपकारिणा निरन्तरंयशश्चन्द्रिकाप्रसारिणा कठिनप्रयत्नोपार्जितेन स्वकीयेनायुर्विज्ञानज्ञानेनानिशं मोदातिशयमनुभवतामग्रजानाम् डॉ० श्रीविशालत्रिपाठिनां, गणेशप्रसादत्रिपाठिनाञ्च महान्तमुपकारं शिरसा धारये, येषां गुणप्रभावाद् धीरधिषणः सन् सम्प्रत्यपि शास्त्रचिन्तनसंलग्नोऽस्मि। अन्यानपि च स्वकीयेऽस्मिन् जन्मनि बहुभिस्सन्मित्रैः बन्धुभिस्सह परिवर्धितोऽभूवम्- श्रीशिवशंङ्करद्विवेदी, संजयश्रीवास्तवः, नारायणमिश्रः, प्रदीपमिश्रः, श्रीनिवासद्विवेदी, अनुजश्चन्द्रभानुत्रिपाठी, स्वसा रेखा, स्वसृनिर्विशेषा च मनीषा, विशेषतश्च शिवाकान्तद्विवेदी येन सुहृच्छब्दः सार्थकीकृतः, इत्येतान् सर्वान् प्रति स्वकीयां सम्भावनां विशदीकरोमि।

भवति किल एतादृक्कार्यजातं द्रव्यातिशयापेक्षि अत एतदर्थं भारतीय-विश्वविद्यालयानुदानायोगोऽपि प्रशंसास्पदं यस्माल्लब्ध्वा शोधवृत्तिम् "स्फोटसिद्धान्तसमीक्षेति" शोधप्रबन्धः मया पूर्णतां प्रापितः।

यस्य च महता सत्प्रयत्नेन शोधप्रबन्धस्य अस्य शुद्धरूपं टंकणकार्यं समपद्यत सोऽपि श्रीशशिकान्तश्रीवास्तवः भूयोभिः साधुवादैस्सनाथीक्रियते। अन्ये चापि येऽत्र शोधप्रबन्धसम्पादने सहायकास्संजातास्तेऽपि अनेकैस्साधुवादैः समाजगन्तो।

समीक्षात्मकस्यास्य शोधप्रबन्धस्य साफल्यन्तु सम्यग्गुणदोषविवेचन-पर्यवसायिना विद्वत्तोषेणैवास्ति निर्धारयमतः –

शोधप्रबन्धोऽयमुदारभावैः
समीक्षकैर्निर्मलशेमुषीकैः ।
आलोच्य हृष्टैरनुमंस्यते चेद्
मम प्रयत्नो भविताप्तकामः ।।

विनयावनतः
( बलबहादुरत्रिपाठी )

14 जनवरी
1989

इलाहाबादविश्वविद्यालयः

## विषयानुक्रमणिका

"प्रथमोऽध्यायः"

## स्फोटसिद्धान्तस्य स्रोतांसि

1- वैदिकवाङ्मये वाक्तत्त्वम्

2- ऋग्वेदे

3- यजुर्वेदे

4- अथर्ववेदे

5- पुराणेषु स्फोटः

6- निरुक्ते स्फोटसंकेतः

7- तन्त्रागमेषु स्फोटबीजम्

8- योगशास्त्रे स्फोटसंकेतः

9- स्फोटवादस्य स्वतन्त्ररूपेण प्रतिष्ठापनम्

10- त्रिमुनिमतम्

11- वाक्यपदीये स्फोटः

12- नागेशमतम्

13- कैयटमतम्

14- आधुनिकविदुषां दृष्टिः

15- भारतीयपाश्चात्त्यविचारकाणां मतम् ।

## स्फोटसिद्धान्तस्यस्रोतांसि

अखिलेऽस्मिन् भारते जीवनपद्धतेः प्रत्येकं विधा इव शब्दशास्त्रीय-चिन्तनमपि आध्यात्मिकमेव। अद्यापि प्रतिकूलपरिस्थितौ शब्दब्रह्मरूपः परमेश्वरः एव परिपालनाय प्रभुरिति विश्वसन्ति शब्दविदः । भारतीयचिन्तन-परम्परायाः आदिस्वरूपं वेदेष्वेव सुरक्षितं परिलक्ष्यते। वैदिकर्षीणाम् "सार्थकशब्दा एव प्रयोक्ताः नानर्थकाः[1] "इत्युद्घोषणा अद्यापि सार्थकीभवति, यतोहि निरर्थकाः शब्दाः फलपुष्पाभाववान् वृक्ष इव निष्प्रयोजना एव सन्ति । अथ च सच्छब्दोपासकाय वागियं सर्वान् रहस्यान् उद्घाटयति।[2] ऋग्वेदे स्वीकृताः वाण्याश्चत्वारो[3] भेदा अद्यापि भाषातत्त्वचिन्तनपराणां विदुषां व्याख्यानविषयाः भवन्ति । ऋग्वेदे तु वाचमधिकृत्य सम्पूर्णं सूक्तमस्त्येव,ब्राह्मणारण्यकोपनिषद्ग्रन्थेषु अपि वाग्विषयकाः अतिसूक्ष्मविचाराः दृष्टिपथमायान्ति ।

### ऋग्वेदे वाक्तत्त्वम् -

यद्यपि वेदेषु "स्फोट " इति शब्दस्य नाम्नोल्लेखः नोपलभ्यते तथापि स्फोटसिद्धान्तस्य आधारभूतानि तत्त्वानि-शब्दनित्यत्वं शब्दविभुत्वं शब्दैकत्वमित्यादीनि सन्त्येव । तत्र " एकोऽहं बहु स्यां प्रजायेय " इति परमतत्त्वसंकल्पेन परातः श्रेणिद्वयमाविर्भवति-एका शब्दश्रेणिः,अपरा चार्थश्रेणिः । तत्र शब्दश्रेण्यां पश्यन्त्या उद्भवः,अर्थश्रेण्यां च प्रतिभाया आविर्भावः ।

---

1- स्थाणुरयं भारहारः किलाभूदधीत्यवेदं न विजानाति योऽर्थम्- ऋग्वेद-

2- ऋग्वेद- 10/6/71/4

3- चत्वारि वाक्परिमिता पदानि तानि विदुः ब्राह्मणः ये मनीषिणः
गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।।
ऋग्वेद- 1/ 164/ 45

शब्दार्थयोः तादात्म्यात् क्वचित् स्थलेषु द्वयोः साङ्कर्येण व्यवहारः । एवञ्च पश्यन्ती एव स्फोटव्याकरणप्रणववेदादिशब्दैस्तत्त्वविद्भिः व्यवह्रियते। ऋग्वेद स्थवाक्सूक्ते वाण्या स्वयमेव स्वशक्तेः सामर्थ्यस्य च वर्णनं कृतम्[1] । जगत्यस्मिन् सर्वाणि कार्यजातानि वाचा एव सम्पादितानि भवन्ति। देशकालयोः वक्तुश्च भेदेनानेकरूपा वागियं पृथिव्या आरभ्य द्युलोकं यावत् प्रसरति, अथ च सर्वं विश्वमुत्पादयन्ती वायुरिव सर्वत्रगा, स्वमहिम्ना च अतिक्रान्तभूद्युलोकाप्यस्ति। जन्मना सार्धमेव कण्ठमुद्भिद्य वाक् प्रस्फुटिता, अत एव श्रवणीयत्वाच्चास्याः "शब्द" इति संज्ञा भवति। वस्तुतः विश्वस्मिन् जातमात्रस्य प्रादुर्भावस्थितिसंहारेषु आरम्भमाणेषु सत्स्वेव यः पदार्थः सर्वप्रथममस्तित्ववान् भवति, तत्तु शब्दतत्त्वमेव। मनसि यादृशी इच्छासंकल्पो वा तदनुकूलमेव शब्दस्य आविर्भावो जायते। शब्दतत्त्वस्यास्य कालवत् सर्वत्रगतिः आकाशवच्च सर्वत्रव्याप्तिरस्ति। अखिलभुवनमण्डलप्राङ्गणे विविधरूपेषु परिलक्षितं भवति अस्यास्तित्वम्। नदीनां कलकलनिनादेषु निर्झरीणां निःसरणेषु, भ्रमराणां गुञ्जनेषु, परिभूतामालापेषु, सिंहानां गर्जनेषु गवां रम्भनेषु इत्यादिषु च तदेव स्वरूपं प्रकम्पितं भवति यन्मानवगदितेषु तरङ्गितमस्ति।

वेदेष्वभिहितं शब्दस्य सूक्ष्मरूपं वाक्तत्त्वमिदं सहस्रधा व्याप्तमस्ति[2] । ऋग्वेदे अस्य व्यापकत्वम् आद्युलोकम् आपृथिवि, अथ च यावद् ब्रह्मतत्त्वं व्याप्तं तावद् वाक्तत्त्वमपि इति वर्णितमस्ति। वेदेऽस्मिन् स्वकीयं वैशिष्ट्यमित्थं प्रतिपादितम् वाचा–

अहं रुद्रेभिः वसुभिश्चरामि अहमादित्यैरुत विश्वदेवैः ।

---

1– ऋग्वेदः 10/125

2– ऋग्वेदः 10/114/8

अहं मित्रावरुणोभा बिभर्मि अहमिन्द्राग्नी अहमश्विनोभा ।।
अहं सोममाहनसं बिभर्मि अहं त्वष्टारमुतपूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्य यजमानस्य सुन्वते ।।
अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ।।[1]

एवमेव ब्राह्मणारण्यकग्रन्थेषु वाक्तत्त्वस्यास्य वैशिष्ट्यं बहुशः प्रतिपादितमस्ति। यथा हि-

वाग्वै ब्रह्म च सुब्रह्म च ।[2]
यद्वै प्रजापतेः परमस्ति वागेव तत् ।[3]
वाग्ब्रह्म ।[4]
वाग्वै ब्रह्म ।[5]
ओमित्येतदक्षरमिदं सर्वम् ।[6]

इत्यादिषु ब्राह्मणवाक्येषु वाक् ब्रह्मत्वेन प्रतिपादितास्ति । अथ च -

वागेवार्थं पश्यति, वागेवार्थं ब्रवीति वागेवार्थं निहितं संतनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ।।[7]

---

1- ऋग्वेदः 10/125/1-3
2- ऐतरेयब्राह्मणे 6/3
3- शतपथब्राह्मणे- 5/11/28
4- गोपथब्राह्मणे- 2/10
5- जैमिनीयब्राह्मणे 2/96
6- प्रश्नोपनिषद 5/3
7- नृसिंह- 6/2

शब्दतत्त्वाख्यं ब्रह्म प्रथमं स्वलिङ्गं त्रिमात्रमोङ्कारम् ततोऽक्षर-समाम्नायम्, ततश्चतुरो वेदान् विरचय्यसर्वं जगदरचयत्, इदमेव शब्दतत्त्वाख्यं ब्रह्म च सूक्ष्मप्रणवरूपं परब्रह्मपदेन, त्रिमात्रमोङ्काररञ्च अपरब्रह्मपदेन, शब्दब्रह्म-पदेन च व्यपदिशन्ति पुरोविदः । ब्रह्मवाचोः व्यापकतां तुलयन् ऋषिः वाचं ब्रह्मसमामेव स्थापयति। यथा च भारतीयमनीषिभिः बृहत्तमेऽर्थे "ब्रह्म" इत्यस्य प्रयोगः कृतः तथैव वागपि बृहत्तमपदार्थ एव। वागेव च एकमात्रं ज्ञान-स्याधिष्ठानम्[1] । सम्पूर्णमपि जगदिदं वाचा एव विकसितम्, वागेव च परमं ब्रह्म।[2] उपर्युक्तेषु सर्वेषु स्थलेषु "वाक्" शब्दस्य प्रयोगः सूक्ष्मतत्त्वरूपेऽर्थे एव कृतोऽस्ति । ऋग्वेदे वर्णितमस्ति यत् ये जनाः वाचि न विश्वसन्ति ते स्वयमेव नश्यन्ति[3] । देवगन्धर्व-पशु-मनुष्याः सर्वेऽपि वाण्यामेव जीवनं धारयन्ति, अथ च सर्वमपि विश्वमिदम् वाच्येव समाहितम् -

वाचं देवा उपजीवन्ति विश्वे,
वाचं गन्धर्वा पशवो मनुष्याः ।
वाचीमा विश्वाभुवनान्यर्पिता,
सा नो हवं जुषतामिन्द्रपत्नी[4] ।।

वाक्सृष्टेरभावे धर्माधर्मयोः, साध्वसाध्वोः सहृदयनिर्दययोः ज्ञानमपि न संभाव्यते, वागेव सर्वान् एतान् प्रत्याययति।[5] महर्षियास्कस्य "वाक् कस्माद् वचेः[6]" इत्युक्तिरपि शब्दतत्त्वस्य स्वरूपप्रत्यायिका एव। वैदिकेषु अवैदिकेषु

---

1- सर्वेषां वेदानां वागेवायतनम् । बृहदारण्यकोपनिषद 2/4/।।
2- वाग्वैसम्राट् परम ब्रह्मा तदेव• 4/1/2
3- अमन्तवो मां त उपक्षियन्ति। ऋग्वेदः 10/125/4
4- तैत्तरीयब्राह्मणे
5- छान्दोग्योपनिषद 0 0 6/1/23
6- निरूक्त- 2/22/2

च सर्वेष्वेव दार्शनिकप्रस्थानेषु शब्दस्वरूपस्य, तस्योच्चारणस्य शब्दबोधस्य शब्दप्रमाणस्य च विस्तरेण वर्णनं कृतमस्ति । विचारस्य गतिरियं कदाचित्तु स्थूलात् सूक्ष्मं प्रति कदाचिच्च सूक्ष्मात् स्थूलं प्रति वर्तते।

वाक्तत्त्वमिदं न केवलं चेतनपदार्थेष्वेव अधिष्ठितमपितु अचेतनेष्वपि अस्य समाना एव गतिः[1] । दिव्यं वाक्तत्त्वम् ऐश्वर्यं प्रददाति कामनाश्च पूरयति । यथा च वर्णितं ऋग्वेदे –

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवा वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ।।[2]

एकमेव सदक्षरं नित्यं शब्दतत्त्वं शास्त्रेषु प्रतिभारूपेण सर्वव्यापकम् इन्द्र-मित्रवरुणाग्निदिव्यसुपर्णाद्यनेकरूपेणोपवर्णितमस्ति[3] ।

<u>यजुर्वेदे वाक्तत्त्वम् –</u>

यजुर्वेदे शब्दतत्त्वं पुरुषरूपेण परिकल्प्य तस्य सर्वव्यापकत्वम् सर्वशक्तिमत्त्वञ्च " सहस्रशीर्षा पुरुषः "इत्यस्मिन् पुरुषसूक्ते प्रतिपादितमस्ति[4] । सर्वप्राणिसमष्टिरूपः ब्रह्माण्डदेशो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा इति । सः पुरुषः ब्रह्माण्डगोलकरूपां पृथिवीं परितः परिव्याप्य स्थितो भवति ।

---

1– ऋग्वेदः 8/100/10
2– ऋग्वेदः 10/100/11
3– इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः सः सुपर्णो गरुत्मान् ।
एकं सद्विप्राः बहुधा वदन्ति– ऋग्वेदः 1/164/46
4– सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ।
शु० यजुवेदः 1/16/31
ऋग्वेदः 10/90

सांख्यशास्त्रेऽपि ब्रह्मतत्त्वं पुरुषात्मनां परिकल्प्य तस्य प्रकृतिविकृतिराहित्यमुपवर्णितम्[1] । इदमेव च परमतत्त्वं वैयाकरणैः स्फोटत्वेन स्वीकृतम्। शाब्दिकप्रतिपादितं प्रतिभातत्त्वमेव अत्र वेदे मेधातत्त्वम् (बुद्धितत्त्वम्) तदेव च समस्तदेवानां पितृगणानाञ्च उपास्यमपि-

यां मेधां देवगणाः पितरश्चोपासते।
तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा[2] ।।

स एव परमपुरुषः सृष्टिमभिव्याप्य सर्वत्र प्रोतः, सूत्ररूपः, आत्मतत्त्वेन च सृष्टौ अनुप्रविष्टः सततत्त्वस्य तन्तुरिव ब्रह्माण्डे सूत्रात्मरूपेण व्यापकश्च वर्तते। तदक्षरतत्त्वस्य आत्मसाक्षात्कार एव ब्रह्मसाक्षात्कारः, सैव च ब्रह्मरूपता[3] । यजुर्वेदस्य "इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् " इति मन्त्रे यद् ब्रह्मशक्तिः क्षत्रशक्तिश्चैतद् शक्तिद्वयं प्रतिपादितं तदेव शाब्दिकैः यथाक्रमं स्फोटः ध्वनिश्चेत्युभयरूपेणोपवर्णितम्[4] । यजुर्वेदे तदेवाक्षरतत्त्वम् सहस्रशीर्षात्मकं बहुधा इत्थं वर्णितमस्ति -

तदेवाग्निः तदादित्यस्तद्वायुस्तदु चन्द्रमा ।
तदेव शुक्रं तद्ब्रह्म ता आपः सः प्रजापतिः[5] ।।

वाक्शक्तेः प्रभावादेव इन्द्रः अपशब्दोच्चारिणः पुरुषान् संहरति अथ च

---------------

1- न प्रकृति न विकृतिः पुरुषः । सां०का० 3
2- शु० यजुर्वेदः 32/14
3- आस्य तन्तु वितत विचृत्य तदपश्यत्
तदभवन्तदासीत् । शु० यजुर्वेदः 32/12
4- ध्वनिःस्फोटश्च शब्दानाम् । म०भा० 1/1/60
5- यजुर्वेदः-32/1

आत्मतत्त्वात्मनाभ्युपगममिदं वाक्तत्त्वमेव शक्तिरूपेण अमृतानपि कालकवलीकरोति। विविधगुणसम्पन्नं वाक्तत्त्वमिदं समुद्रवदगाधम्, सर्वव्यापकम्, इन्द्रशक्तिसम्पन्नं प्राणापानरूपेण मूलतत्त्वस्य धारम्, देवमार्गरक्षकं विघ्ननिवारकञ्चाभिमतम्[1]। चिदादि-धर्मयुक्तस्य वाक्तत्त्वस्यास्य विविधगुणसम्पन्नता वेदेऽस्मिन् स्वीकृता -

चिदसि मनासि धीरसि दक्षिणासि ।

क्षत्रियासि यज्ञियासि अदितिरस्युभयतः शीर्ष्णी[2] ।

अत्र "उभयतःशीर्ष्णी" इत्यनेन शब्दतत्त्वस्य गुणद्वयं ध्वनिस्फोटौ एव परिगृहीतौ भवतः । यजुर्वेदे वाक्तत्त्वम् "विश्वकर्मा" इत्यपि अभिधीयते[3] अत एव च अस्य सृष्टिकर्तृत्वमपि सूचितं भवति । यथा च शतपथब्राह्मणे-

वाचा हीदं सर्वं कृतम्[4] ।

कैवल्योपनिषदि वर्णितमस्ति यत् वाचि एव सर्वं प्रतिष्ठितं वाचि एव सर्वं लीनम् वागेव वाङ्मयमक्षरब्रह्म । यथा-

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।

मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्[5] ।।

एतदक्षरतत्त्वमेव ब्रह्मतत्त्वम् अस्यैव च शिवेन्द्रपरमस्वराड्विष्णुप्राणकालाग्नि-चन्द्रादीनि अनेकानि नामानि सन्ति। त्रिकालेषु यदस्तित्ववद् भवति तदक्षर तत्त्वमेव[6] ।

---------------

1- समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि ।
बुध्न्यो वागस्यैन्द्रमसि सदोऽस्यृतस्य धारौ ।। यजुर्वेद 5/33

2- यजुर्वेद- 4/19

3- वाग्वै विश्वकर्मर्षिः । तदेव 13/58

4- शतपथब्राह्मणम् -8/1/29

5- कैवल्योपनिषद् 1/19

6- तदेव 1/8-9

वैयाकरणैः यत्प्रकृतिप्रत्यययोः ध्वनिस्फोटयोश्च समन्वयात्मकः सिद्धान्तः स्पष्टतया प्रतिपादितः तस्य विवेचनं पूर्वमेव यजुर्वेदस्य चत्वारिंशत्तमेऽध्याये कृतमस्ति। ये जनाः केवलमविद्याम् अर्थात् ध्वनिवादं, प्रकृतिवादं, भौतिकवादं, कर्ममार्गञ्च उपासते ते तमोमयमार्गं प्रविशन्ति तथा च ये विद्याम् अर्थात् स्फोटवादं, प्रत्ययवादम्, अध्यात्मवादं, ज्ञानमार्गञ्चोपासनाविषयं कुर्वन्ति ते ततोऽप्यधिकं तमोमयमार्गं प्रविशन्ति। अत एवात्र समन्वयात्मकः सिद्धान्तः श्रेयस्करः, समन्वयेन चानेन अविद्यया अर्थात् कर्ममार्गेण मृत्युबन्धनमुच्छिद्य विद्यया अर्थात् ज्ञानमार्गेण अमरत्वम् अक्षरतत्त्वम् निर्वाणञ्च प्राप्नोति[1]। एवमेव चाविद्याविद्यात्मकं मार्गं शाब्दिकैः प्रकृतिप्रत्ययरूपेण स्फोटध्वनिरूपेण च प्रतिपाद्य तयोः साध्यसाधनत्वं व्यवस्थापितम्। भर्तृहरिणा प्रतिपादितं यत्-सर्वेषां शास्त्राणां विवेचनं व्यावहारिकम्[2] शास्त्रन्तु तत्त्वप्रतिपादने सर्वथा अक्षमं, यतो हि तत्त्वमात्मसाक्षात्कारविषयः स्वानुभूतिसंवेद्यश्च। जयन्तभट्टोऽपि अविद्यां विद्याया उपायत्वेनैवाङ्गीकरोति, अक्षरं वाक्तत्त्वमेव च समस्तेषु ज्ञानेषु अविनाशिरूपेणावस्थितमस्ति[3]।

अथर्ववेदे वाक्तत्त्वम् -

अथर्ववेदे वाक्तत्त्वं विद्युद्रूपेण निरूपितमस्ति, तच्च शब्दब्रह्मतत्त्वम् वैखरीमध्यमापश्यन्त्यात्मकम् त्रिरूपकम्, नानारूपेषु प्रतिष्ठितम्, सर्वदिक्षुव्याप्तमपि अनेनैव च वाक्तत्त्वेन धुलोके पृथिव्याञ्च शक्तिराधीयते, अनेनैव प्राणिषु जीवनशक्तिः, किं बहुना अत्र वागियं प्रजापतिस्वरूपा, ब्रह्मतत्त्वेन सुतीक्ष्णा, व्रतस्थिता, सत्यावृता, स्वधापरिधानयुक्ता, श्रद्धापरिच्छिन्ना दीक्षया गुप्ता सुरक्षित च वर्णितास्ति - यथा-

---

1- यजुर्वेद- 40/12-14

2- व्यवहाराय मन्यन्ते शास्त्रार्थप्रक्रिया यतः। वा०प० 2/234

3- अविद्यैव विद्योपाय इत्याश्रीयते। वाग्रूपता तत्त्वम् सर्वत्रप्रत्यये

श्रमेण तपसा सृष्टा ब्रह्मणा वित्तर्तेश्रिता ।

सत्येनावृता श्रिया प्रावृता यशसा परिवृता ।।

स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया गुप्ता ।।[1]

पुराणेषु स्फोटः

वैदिकवाङ्मये स्फोटतत्त्वविषयकं वाक्तत्त्वविषयकञ्च यत्प्रतिपादितं तदत्र विस्तरभियासंक्षेपेणैव विविच्य सम्प्रति पुराणेषु दृष्टिपातं कुर्मः यतः तत्रापि कृतसपरोऽयं स्फोटः आत्मनः पुराणामभिव्यनक्ति। तथा चोक्तं श्रीमद्भागवते-

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ।

नादो वर्णस्त्वमोङ्कारः आकृतीनां पृथक्कृतिः ।।[2]

ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तः प्रभवः स्वराट् ।

यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ।।

शृणोति य इमं स्फोटं सुप्तश्रोते च शून्यदृक् ।

येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ।।

स्वधाम्नः ब्रह्मणः साक्षाद् वाचकः परमात्मनः ।

सः सर्वमन्त्रोपनिषद् वेदबीजं सनातनम् ।।[3]

पुराणेऽस्मिन् शब्दब्रह्म स्फोटतत्त्वं वा न केवलं सृष्टिमूलत्वेनाभिमतमपितु शब्दब्रह्मणः उपासनाफलं मोक्षप्राप्तिः इत्यपि स्वीकरोति महर्षि-वेदव्यासः।

---

1- अथर्ववेदः - 12/5/1-3

2- श्रीमद्भागवत- 10/85/9

3- तदेव- 12/6/39-41

4- शक्तिःकुण्डलिनी ति विश्वजननव्यापारबद्धोधमाम्
ज्ञात्वेत्थंनपुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः ।। तदेव

यथा च भागवते-

"द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम्"[1] अत्र द्रव्यमित्यनेन आधिभौतिकम्," क्रिया " इत्यनेन आध्यात्मिकम् ,"कारक" इत्यनेन चाधिदैविकमेव विवक्षितम् । धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मोक्षप्राप्तिरेव मानवजीवनस्य चरमं लक्ष्यम्,तस्य प्राप्तिश्च न ब्रह्मज्ञानमन्तरा शक्या,तच्च ब्रह्म परावाग्रूपेण हृदयाकाशे अज्ञानावृतं[2] भवति। तस्य प्रत्यक्षमेव शब्दविदां परमं लक्ष्यम् । यथा प्रतिपादयति महर्षिपतञ्जलिः:-

"महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणम् "[3] हरिणापि मतमिदं समर्थितं वाक्यपदीये-

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञः तद्ब्रह्मामृतमश्नुते ।।[4]

स्फोटरूपस्य शब्दस्य परमेश्वररूपताप्रतिपादनम् कृष्णोद्धवप्रसङ्गे कृतमस्ति। तत्र हि भगवता कृष्णेन शब्दब्रह्मोपदेशः इत्थं कृतः -

स एष जीवो विवरप्रसूतिः, प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्यरूपम्, मात्रा स्वरो वर्ण इति स्थविष्ठः।।[5]

---------------

1- तदेव- 12/6/38
2- समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशाद्भून्नादो वृत्तिरोधाद् विभाव्यते।। श्री0भा0-12/6/37
3- व्या0म0भा0 1/1/1
4- वा0प0 1/32
5- श्रीमद्भागवते- 11/12/17

अत्र शब्दस्य चत्वारि रूपाणि स्वीकृतानि-

| | | | |
|---|---|---|---|
| 1- | विवरप्रवृत्तिः | = | परा |
| 2- | प्राणेन घोषेण गुहां प्रविष्टः= | | पश्यन्ती |
| 3- | मनोमयं सूक्ष्ममुपेत्यरूपम् | = | मध्यमा |
| 4- | मात्रास्वरो वर्ण इति स्थविष्ठः | = | वैखरी।। |

शब्दापरपर्यायः स्फोटोऽयं महाभारते परा इति नाम्ना वर्णितोऽस्ति-

"स्वरूपज्योतिरेवान्तः परावागनपायिनी ।"[1]

सर्वेपि भाषावैज्ञानिकाः ऐकमत्येन स्वीकुर्वन्ति यत् सृष्टेरारम्भकाले स्वयम्भूः परमात्मा सर्वप्रवृत्तिप्रकृतिम् अनादिनिधनां वेदज्ञानमयीं वाचम् उपदिदेश। यथाह- वेदव्यासः-

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।

आदौ वेदमयी दिव्या यतः सर्वप्रवृत्तयः ।।[2]

एषा एव वाणी विश्वस्मिन् नामकर्मणामपि निर्मात्री इतिस्मृतिकाराणाम् मतम्[3] ।

हरिवंशपुराणस्थः -

"अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः"।

इति श्लोकोऽपि स्फोटप्रतिपादनपरक एव।

यास्कमतम्-

वैदिकवाङ्मये अथ च पुराणेषु संक्षेपेण दृष्टिपातानन्तरं शब्दतत्त्वविषयकं महर्षियास्कस्य काद्वृष्टिरिति प्रस्तूयते। यास्केन उपमन्यु-औदुम्बरायण-वार्ष्यायणि-

---

1- वै०सि०ल०म०- शक्त्याश्रय निरूपणम्

2- म०भा०शा०पर्व- 232/4

3- सर्वेषां तु नामानि कर्माणि च पृथक् पृथक् ।
 वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।
 मनुस्मृति-1/21

शाकटायन- गार्ग्यप्रभृतीनां निष्कृष्टार्थः निरूक्ते प्रतिपादितः । तस्य महर्षेः नामादिविभाजनम् उत्तरवर्तिणां समेषां भाषामीमांसकानां कृते उपजीव्यतामादधाति। स्वसमकालिकर्षीणां मतं विविच्य तेन शब्दस्य नित्यत्वं व्यापकत्वञ्च व्यवस्थापितम्।[1] "वाचा विरूपनित्यया" इति ऋग्वेदीयं वचनमनुसृत्य यास्केन शब्दतत्त्वस्य नीरूपता, नित्यता चापि प्रतिपादिता। वाक्तत्त्वादेव च अर्थतत्त्वस्य विकासः इत्यपि स्वीकरोति यास्कः । तथा च निरूक्तम् -

वाक् पुनः प्रकाशयत्यर्थान्[3] ।

## तन्त्रागमेषु स्फोटबीजम् -

शैवागमे तान्त्रिकग्रन्थेषु च पराशक्तिरूपा चितिरेव विश्वसृष्टेरूपादानमिति सिद्धान्तितम् -

चितिः स्वतन्त्रा विश्वसिद्धिहेतुः ।।

स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।।[4]

इति प्रत्यभिज्ञास्येन सूत्रद्वयेन स्पष्टं भवति यद् विश्वस्य विकासः चितेः परावाचः विवर्तरूपः, सैव च परावाक् ऐन्द्रियप्रत्यक्षहेतवे वर्णत्वेन प्रस्फुटिता भवति। योगिनी हृदये तु परावागियं स्वतन्त्राभिमता-

आत्मनः स्फुरणं पश्येद् यदा सा परमाकला

अम्बिकारूपमापन्ना परावाक् समुदीरिता।।

---

1- व्याप्तिमत्वात्तु शब्दस्य 1/1।
2- तस्मै नूनमभिधवे वाचा विरूपनित्यया ।।
ऋग्वेदः 8/75/6
3- निरूक्तम् - 9/19
4- प्र०भि०हृ०- सूत्र 1-2

यथा बीजेषु वृक्षाः तथैव परावाण्यां विश्वमवस्थितमस्ति । शब्दशब्दार्थकारणं पराख्पशब्दब्रह्म बिन्दुस्वरूपत्रिगुणात्मिकाप्रकृतेरेव प्रादुर्भवति इति सर्वमेतत् स्पष्टं प्रतिपादितं शारदातिलके-

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेः बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा ।।
परमशक्तिमयःसाक्षात् त्रिधासौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः।।
बिन्दुः शिवात्मको बीजं शक्तिनादस्तयोर्मिथः।
समवायः सः विज्ञेयः सर्वागमविशारदैः ।।
रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत ।
वामा ताभ्यः समुत्पन्ना रूद्रब्रह्मरमाधिपा ।।
संज्ञानेच्छाक्रियात्मानो वह्नीन्दुवर्कस्वरूपिणः ।
भिद्यमानात् पराबिन्दोरव्यक्तात्मा रवोऽभवत् ।।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ।
शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः ।।
न हि तेषां तयोः सिद्धिः जडत्वादुभयोरपि ।
चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ।।

-------------------

1- शारदातिलक-प्र0 पटल

एतदतिरिक्तम् अन्येष्वपि तन्त्रग्रन्थेषु स्फोटविषयकं वर्णनं लभ्यते। श्रीनेत्रतन्त्रे तु स्फोटनाम्नैव निर्देशः कृतोऽस्ति -

"ध्वनिरूपो यदा स्फोटस्त्वदृष्टाच्छिवविग्रहात्"।।[1]

स्वच्छन्दतन्त्रेऽपि स्फोटस्य शब्दभेदत्वेन वर्णनमुपलभ्यते। यथा-

घोषो रावः स्वनः शब्दः स्फोटाख्यः ध्वनिरेव च ।
झंकारोऽध्वकृतश्चैव अष्टौ शब्दाः प्रकीर्तिताः ।।[2]
भ्रुवोर्मध्ये यदागच्छेत् स्फोटशब्दस्तु जायते ।
बिन्दुं भेदयती देवी शब्दो धुमधुमायते ।।[3]

तान्त्रिकमतानुसारेण अक्षया खलु मंत्रशक्ति, शक्तिसम्पन्नः परमसत्तारूपः शिवश्च शक्तियुतां मन्त्राणां यथार्थरूपम् । अस्माभिरूच्चरिताः शब्दाश्च सर्वशक्तिमत्याः तस्याः परमसत्तायाः एव प्रभवन्ति। अतः भारतीयभाषाविज्ञानस्य परमसत्ताविषयिण्याः विचारधारायाः आरम्भकस्तु वेदः, किन्तु तस्याश्चिन्तनपरम्परायाः पर्यवसानम् तन्त्रेषु एव परिलक्ष्यते। वैयाकरणाः वैदान्तिनश्च यत्तत्वं शब्दब्रह्म परब्रह्म इति वा व्यवहरन्ति तदेव शाक्तमते परावाणीति। योगिनीहृदयस्य भूमिकायां पराशक्तिसामर्थ्यप्रतिपादकः कूर्मपुराणस्य एकः श्लोकः उद्धृतः । स च-

ममैवाज्ञा पराशक्तिः वेदसंज्ञापुरातनी ।
ऋग्यजुः सामरूपेण सर्गादौ सम्प्रवर्तते ।।[4]

---------------

1- श्रीनेत्रतन्त्रम्- दशमाधिकारे ।
2- स्वच्छन्दतन्त्रे- 1/17
3- तदेव 4/375
4- योगिनीहृदय- भूमिकायाम्

अत्र पराशक्तिरेव सृष्टयादौ क्रमशः सामरूपेण प्रवृत्ता भवति इति प्रतिपाद्यते । पराशक्तिरेव अर्धस्वरूपा इति दुर्गासप्तशत्यां स्वीकृतमस्ति -

अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः । [1]

इदमत्र ध्येयं यत् शाक्तमते पराशक्तेरेव विकसितं रूपं शब्दब्रह्मेति, तच्च वेदान्तिनये ब्रह्मापरपर्यायः, शाब्दिकमते च शब्द एव ब्रह्म इति। शाक्तमते इच्छाज्ञानक्रियाशक्तयः सरिद्वत् स्वधार्णवान् निस्सरन्ति । अतः मतेऽस्मिन् इच्छा- ज्ञान- क्रियायाः समरूपं पश्यन्ती- मध्यमा वैखरीनाम्ना विकसिता परावाणी एव ज्ञानविषय इति विवेचितमस्ति। पूर्णरूपत्वादेव च अस्या "परा" इति संज्ञा भवति । [2] तान्त्रिकैः परा नादरूपेणापि स्वीकृता। अतिसूक्ष्मत्वात् अगम्यत्वात्तच्च सूक्ष्मा इत्यपि अस्याः कृते व्यवहारः भवति, प्रतिभा इति च अस्या एव अपरन्नाम, प्रतिभा चेयं चित्स्वभावा स्वरसोदिता परावाग् रूपा एव। यथा-

अनन्यापेक्षिता यस्याः विश्वात्मत्वं प्रतिप्रभोः तां परां प्रतिभां देवीम् । [3]

परात्रिंशिकायामपि प्रतिभारूपेणाभिहिता शक्तिरियम् आदिमा सर्वदोषशून्या च स्वीकृता । " परामृशते च प्रथमं प्रतिभाभिधानां संकोचकलङ्क-कालुष्यशून्यां भगवती संविदम् । [4] अभिनवगुप्तोऽपि पराशक्तिं प्रतिभात्मनाभिप्रेत्य तामभिवन्दमानः आह"-

---

1- दु०स० 1/74
2- पूर्णत्वात् परा। ईश्वरप्रत्यभिज्ञाविमर्शः 1/5 पृ0 205
3- तन्त्रालोकः ।
4- परात्रिंशिका -पृ0 102

यदुन्मीलनशक्त्यैव विश्वमुन्मीलयति क्षणात् ।

स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ।।[1]

अनेन प्रतिभारूपिणी पराशक्तिरेव जगदुपादानमिति प्रतिपादितम् ।

पदार्थादर्शे राघवभट्टेनापि चितिशक्तिः एव परा इति सिद्धान्तितम् । यथाह सः - "अथवा चिच्छक्तिरेव पराख्या चैतन्याभासविशिष्टतया प्रकाशिका मायानिष्पन्दा " परा" वागित्यर्थः "[2] अत्रैवोद्धृतः एकः श्लोकः कुण्डलिनी-मध्यगतां ज्योतिस्वरूपां सूक्ष्मां प्रतिपादयति । यथा-

सूक्ष्मा कुण्डलिनीमध्ये ज्योतिर्मात्रात्मरूपिणी।

अश्रोत्रविषया तस्या उद्गच्छत्यूर्ध्वगामिनी ।।[3]

चैतन्याभासविशिष्टा सती प्रकाशिकामायैव परा, सा च सत्त्वरजस्तमसां त्रिगुणानाम् साम्यरूपा ।[4] तत्र भगवता शङ्कराचार्येणापि सौन्दर्यलहरीस्तोत्रे अस्या शक्तेः विविधरूपता विभुता च वर्णिता। यथा-

मनस्त्वं व्योमत्वं मरुदसि मरुत्सारथिरसि,

त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।

त्वमेवस्वात्मानं परिणमयितुं विश्ववपुषा,

चिदानन्दाकारं शिवयुवतिभावेन विभृषे ।।[5]

---

1- ध्वन्यालोके, लोचन टीकायाम् पृ. ३०

2- पदार्थादर्शे, आगमानुष्ठानम् ।

3- पदार्थादर्शः पृ0 60

4- एका परेति सत्त्वरजस्तमोगुणसाम्यरूपा सौन्दर्यलहरी-34 टीकायाम् ।

5- तदेव- 34

इति श्लोकेन जगद्रूपेण परिणतायां तस्याम् तद्व्यतिरिक्तं किमपि वस्तुजातं नास्ति, एतन्मयत्वादेव विश्वप्रपञ्चस्य इति उद्घोषितम् । अन्यच्च -

तनीयांसं पांसुं तव चरणपङ्केरुहभवम् ।
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलान् ।।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसाम्,
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ।।

इति पद्येन ब्रह्मविष्णुरुद्रादीनां सृष्ट्यादिक्रीडारसचमत्कारानुभावा अपि पराशक्तिमूलाः इति भवति दर्शितम् । तुरीयतत्त्वभूतत्वाच्च अस्याः परायाः स्वप्नावपि न निवृत्तिः । स्वप्रतिष्ठितायां शब्दरूपनिष्पन्दायां परावाण्यामस्याम् इच्छाज्ञानक्रियाख्याः शक्तयः समष्टिरूपेण समुपस्थिता भवन्ति । परा तु निर्विकल्पकज्ञानस्वरूपा, किन्तु अस्याः गर्भम् अकाराद् क्षकारपर्यन्तं समस्तशक्तिचक्रं वर्णमातृकाचक्रञ्च अधिष्ठितमस्ति, वर्णेभ्य एव च सकलं जगदिदं प्रादुर्भूतम् । अत एव तन्त्रग्रन्थेषु जगज्जननीरूपेणाङ्गीकृताः वर्णमातृकाः परासिद्धेः साधनभूताः भवन्ति। परायाः सूक्ष्मतमं तु अकारो हकारश्च, यथा च वर्णितं वरिवस्यारहस्ये-

अहमित्येकमद्वैतं यत्प्रकाशात्मविभ्रमः ।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः।
अनयो सामरस्यं यत् तत् परास्मिन् हि स्फुटम् ।।[2]

----------------

1- एका परेति सत्त्वरजस्तमोगुणसाम्यरूपा सौन्दर्यलहरी-2 टीकायाम्

2- वरिवस्यारहस्यम् - पृ0 49

अत एव च परायाः एकत्वमद्वैतत्वं नित्यत्वं तस्याश्च संभवमात्रमिति सिद्धान्तितं तान्त्रिकैः । यथा- "परावाग्रूपस्य नित्यत्वेनोत्पत्त्ययोगादिति परायाः संभवमात्रम् ।"[1]

पराशक्तिरूपा चितिरेव भगवती शक्तिः तत्तदनन्तजगदात्मना स्फुरति[2]। परमशिवस्य येच्छाशक्तिरेव विमर्शपदवाच्या तत्त्वतश्च शिवाद्भिन्नैव सा भवति। शिवस्य स्वाभाविकी इच्छाशक्तिरियं माहेश्वरी इति स्वीकृत्यैव शारदातिलके -

"शब्दरूपमशेषन्तु धत्ते शङ्करवल्लभा "

इत्युद्घोषितमस्ति। एवम् तन्त्रागमेषु बहुप्रपञ्चितं तत्त्वमिदमत्र विस्तरभिया नोपन्यस्यते।

योगशास्त्रेस्फोटसंकेतः -

पातञ्जलयोगशास्त्रेऽपि वर्णातिरिक्तस्य पदस्फोटस्य वाक्यस्फोटस्य वा वाचकत्वमुद्घोषितम् । तद् यथा योगसूत्रम्-

"शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरूतज्ञानम् ।"[3] अस्य सूत्रस्य भाष्यविवरणे वाचस्पतिमिश्रैः सयुक्तिकंसमर्थितः स्फोटसिद्धान्तः । यथाहि- तदेकं पदमेकबुद्धिविषयम् एकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्धम् अन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्रप्रतिपिपादयिषया

---

1- प्रयोगक्रमदीपिका- पृ0 414
2- शब्दात्मिका सुविमलर्ग्यजुषां निधानम्
   उद्गीथरम्यपदपाठवतां च साम्नाम् ।
   देवी त्रयी भगवती भवभवनाय,
   वार्ता सि सर्वजगतां परमार्तिहन्त्री । दु0स0 4/10
3- पातञ्जलयोगसूत्रम्- 3/17

वर्णैरभिधीयमानैरुच्चार्यमाणैः श्रूयमाणैश्च श्रोतृभिःअनादिवाग्व्यवहारवासनानुविद्धया लोकबुद्धया सिद्धवत्प्रतिपत्त्या प्रतीयते। तस्य संकेतः बुद्धितः प्रविभागः। यथा शिविकोद्वाहनाद्यनेकसाध्यम् एकस्यापि वैकल्ये न सम्पन्नो भवति तथैव अर्थस्य प्रतिपादनमपि अनेकसाध्यत्वात् अन्यमतेन वर्णानामशक्यमिति पदस्यैव व्यञ्जतारो वर्णाः इति स्थितम्।[1]

स्फोटवादस्य स्वतन्त्ररूपेण प्रतिष्ठापनम् –

एतावत् पर्यन्तम् अतिसूक्ष्मतया "वागेव विश्वा भवनानि जज्ञे", "ओमित्येतदक्षरमिदं सर्वम्, इत्यादीनि वेदब्राह्मणादिवारिधिषु समुपलभ्यानि स्फोटस्रोतांसि दर्शितानि। सम्प्रति स्फोटसिद्धान्तस्य मुख्यतः वादत्वेन कुतः प्रारम्भः इति विवेचनावसरः समायाति। सांख्ययोगन्यायवैशेषिकपूर्वमीमांसोत्तरमीमांसादर्शनसृतिः सूत्रात्मनैव परिकीर्तिता तत्रन्महर्षिभिः।

त्रिमुनिमतम् –

भारतीयदर्शनस्य प्रत्येकविधासु अथ च संस्कृतसाहित्येऽपि यत्र तत्र स्फोटप्रतिपादकाः प्रत्याख्यानात्मकाः वा विचाराः प्रकीर्णाः सन्ति, किन्तु अस्य सिद्धान्तस्य पृथग् रूपेण व्याख्यानन्तु " अवङ् स्फोटायनस्य "[2] इति पाणिनिसूत्रमधिकृत्यैव इति तु निर्विवादम्। अस्य स्फोटायन शब्दस्य हरदत्तेन पदमञ्जर्यामित्थं व्याख्यानं कृतम् – " स्फोटोऽयनं परायणं यस्य सः स्फोटायनः

1- योगसूत्रभाष्यविवरणम् 3/17
2- पा0सू0 6/1/123

स्फोटप्रतिपादनपरो वैयाकरणाचार्यः । " नागेशभट्टोऽपि स्वकीयं स्फोटवादनामकं ग्रन्थं विरचय्य उपजीव्यत्वेन स्फोटायनमेव स्मरति। तद् यथा-

"वैयाकरणनागेशः स्फोटायनऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः ।।[2]

किन्तु महती खलु विडम्बना यदधुना स्फोटायनप्रणीतं न किमपि ग्रन्थजातं दृष्टिपथमायाति, किन्तु स्वसूत्रे स्फोटायनाचार्यं स्मरता पाणिनिना तु सिद्धान्तितं यत् ततोऽपि पूर्वं शाब्दिकसिद्धान्तान्तर्भूतः स्फोटात्मकः शब्द इति। शब्दनित्यत्वं व्यवस्थापयता यास्काचार्येण प्रतिवादिनां मतं प्रत्याख्याय तस्य व्यापकत्वम् अणुत्वञ्च दृढीकृतं निरुक्ते। पाणिनिस्तु शब्दनित्यत्वं परिकल्प्यैव सूत्राणि व्यरचत यथा हि- "अर्थवदधातुरप्रत्ययः "[3] इतिसूत्रेणं अर्थविषयकबोधजनकशब्दमुद्दिश्य प्रातिपादिकसंज्ञाविधानम् स्फोटवादमन्तरा अनुपपद्यमानं सत् तं कल्पयति, अन्यथा शब्दे अर्थविषयकबोधजनकत्वरूपा शक्तिः कथं तिष्ठेत् ? ततश्च उद्देश्याप्रसिद्धया सूत्रमेव व्यर्थं स्यात् । एवमेव "युष्मदस्मद्भ्यां ङसोऽश्"[4] इति सूत्रे अशः शित्करणम् -

सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ।।

-------------

1- पदमंजरी, काशिका- 6/1/123
2- स्फोटवादः पृ0 102
3- पा0सू0 1/2/45
4- प्रौ0म0 ल0पु0म0भा0- 7/1/27

इत्यस्याः परिभाषायाः ज्ञापकमिति प्रसिद्धमेव । ततश्चापि शब्दानां नित्यत्वमायाति इति स्फोटवादे सर्वथा प्रवेशः[1] । शब्दादर्थं प्रतिपद्यामहे इत्यनुभवसिद्धस्य अर्थविषयकबोधजनकत्वस्य वृत्त्याश्रयत्वस्य वा अन्यथा नुपपत्त्या एको नित्यः स्फोटः परिकल्प्यते। शब्दस्वरूपं निर्धारयता तत्र भगवता भाष्यकारेण "येन" इति एकवचनेन विषाणिनामिति बहुवचनेन च अनेकोच्चारणविषयगौरित्यस्य एकत्वं सूचितम्,स्फोटाभिप्रायेणैव च येनेति एकवचनं प्रयुक्तम्[2] । एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः,[3] "अथवा उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेः लश्रुतिर्भवति"[4] इत्यादिवचनैः महता समारम्भेण प्रतिपादितोऽयं स्फोटः महाभाष्ये। स चायं स्फोटः निरवयवो नित्यो विभुः सर्ववागर्थप्रपञ्चोपादानभूतप्रणवरूपश्च। " सिद्धे शब्दार्थसम्बन्धे" इत्यस्मिन् वार्तिके कात्यायनेनापि स्फोटात्मा शब्दः स्वीकृतः । शब्दशब्दश्चात्र स्फोटरूपे अर्थे एव अन्यथा शब्दस्य नित्यरूपं सिद्धत्वं कथमुक्तं स्यात् ? किञ्च " स्वं रूपं शब्दस्याशब्दसंज्ञा[5] " इति सूत्रेऽपि " शब्देनार्थगतेरर्थस्यासंभवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् " ". न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययः सम्प्रत्ययस्तस्मादर्थनिवृत्तिः "इति वार्तिकद्वयं विदधता तेन स्फोटवादः सम्यक् समर्थितः, अन्यथा स्फोटातिरिक्तस्य शब्दस्य अभिप्रेतत्वे तत्र अर्थबोधकत्वासंभवेन उक्तवार्तिकयोः अनुत्थानमेव स्यात् । एवमेव बहुत्र स्फोटतत्त्वमैतैरपि समर्थितम् ।

---------------

1- पा0प्र0स0-श0च0प्र0
2- येनोच्चारितेन सास्नालाङ्गूलककुदखुर विषाणिनां सम्प्रत्ययो भवति स: शब्दः इति ।
म0भा0 1/1/1
3- म0भा0 1/1/70 प्रदीपोद्योत
4- म0भा0,भा0सू0 4,प्र030
5- पा0सू0 1/1/68

वाक्यपदीये स्फोटः -

इदमत्र ध्येयम् यत् त्रिमुनिसमर्थितमथ च विशेषतः भाष्यकारेण पतञ्जलिना सुव्यवस्थापितो वैयाकरणानां महते कल्याणाय च व्याकरणागमदर्शन-रूपः स्फोटसिद्धान्तः वाक्यपदीये स्वतन्त्रदर्शनरूपतामासादयति। " स्फोट " इतिपदस्य सर्वप्रथमं प्रयोगस्तु हरिणा ब्रह्मकाण्डस्य नवचत्वारिंशत्तमे श्लोके कृतोऽस्ति। तद्यथा-

"प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः ।।[1]

किन्तु इतः पूर्वमेव स्फोटसम्बन्धिनः सिद्धान्ताः तेन प्रतिष्ठापिताः । स्फोट-तत्त्वस्य शब्दतत्त्वस्य वा तत्त्वमीमांसीयं स्वरूपं व्याकुर्वन् सः -

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।[2]

इत्याह। अस्मादेव शब्दतत्त्वात् चिदचिदात्मकं सर्वं जगदिदं प्रादुर्भूव इति तस्य जगदुपादानताम् अवर्णयत् । अथ च -

"एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ।।[3]

---

1- वा०प० 1/49
2- वा०प० 1/1
3- वा०प० 1/2

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड्भावभेदस्य योनयः ।।[1]

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोग्यरूपेण च स्थितिः ।।[2]

अथर्वाणामङ्गिरसां साम्नामृग्यजुषस्य च ।
यस्मिन्नुच्चावचा वर्णाः पृथक् स्थितिपरिग्रहाः ।।[3]

यदेकं प्रक्रियाभेदैः बहुधा प्रविभज्यते।
तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते ।।[4]

इत्यादिकारिकाभिः तस्य शब्दब्रह्मणः एकत्वम् विभुत्वम्, ऋग्यजुःसाम्ना - चाधिष्ठानत्वं प्रतिष्ठापितम् । शब्दतत्त्वविदः शब्दानां नित्यत्वं मन्वते, अत एव "सिद्धे शब्दार्थसम्बन्धे इत्यस्मिन वार्तिके " नित्यपर्यायवाची सिद्ध-शब्दः इति भाष्यमनुसृत्य वाक्यपदीयकारः स्वाभिमतं विस्तारयति-

"नित्याः शब्दार्थसम्बन्धाः तत्राम्नाताः महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ।।[5]

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ।।[6]

---

1- वा० 1/3
2- वा०प० 1/4
3- वा०प० 1/21
4- वा०प० 1/22
5- वा०प० 1/23
6- वा०प० 1/44

भर्तृहरिणा भाष्योक्तं सम्यक् विवृत्य मध्यमानादाभिव्यङ्ग्यस्य शब्दस्य स्फोटात्मकता ब्रह्मरूपता, नित्यता, अथ च ध्वन्यात्मकशब्दस्य अनित्यता नितरां नैपुण्येण व्यवस्थापिता । विषयेऽस्मिन् च पर्यवलोकनीयाः भवन्ति इमे श्लोकाः-

"स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ।।[1]
स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ।।[2]
शब्दस्योर्ध्वमभिव्यक्तेः वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ।।[3]

व्याकरणशास्त्रमिदं न केवलं शब्दव्युत्पत्तिपरकमेवापितु चरमपुरुषार्थोपायभूतं वाणीदोषचिकित्सारूपम् मुमुक्षूणाञ्च कृते सनातनसरणिः । तद्यथा-

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणामजिह्माराजपद्धतिः ।।[4]
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।[5]

व्याकरणदर्शनस्य पारावाररूपं वाक्यपदीयमित्यत्र नास्ति संदेहावसरः । अत एवातिसूक्ष्मतया किञ्चित्कारिकानिचयोऽत्र प्रदर्शितः । आसां कारिकाणां समीक्षा तु अग्रे विधास्यते ।

---------------

1- वा०प० 1/75
2- वा०प० 1/76
3- वा०प० 1/77
4- वा०प० 1/16
5- वा०प० 1/14

नागेशमतम् –

वस्तुतः स्फोटसिद्धान्तमधिकृत्य यत्किञ्चिदपि भवति वक्तव्यम् तत्सर्वं वाक्यपदीये हरिणा प्रत्यपादि। शब्दसम्बन्धिनः सर्वविधानपि विचारान् परिकल्प्य परिभाव्य च अशेषान् तान् समाधत्त हरिः । सत्यपि च हरौ भट्ट-नागेशः वैयाकरणानां प्रतितन्त्रसिद्धान्तभूतमखण्डम् वाक्यस्फोटं विशेषप्रकारेण विलक्षणमौलिकप्रतिभया च स्पष्टतामानयत्, अवकथच्च मञ्जूषायाम्– " तत्र वाक्य-स्फोटो मुख्यो लोके तस्यैव अर्थबोधकत्वात् तेनैवार्थसमाप्तेश्च । ननु कोऽयं "स्फोट" इति जिज्ञासायामाह सः स्फोटवादे– "

" तत्र स्फुटति अर्थोऽस्मादिति स्फोटः वाचक इतियावत्, एवञ्च वर्ण-स्फोटादिपदानां वर्णादयो वाचकाः इत्यर्थः[2] । वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतीतिः सः स्फोटइति[3] । स्फुट्यते ध्वनिनाभिव्यज्यते इति कर्मव्यु-त्पत्त्या, स्फुटति अर्थोऽनेनेति करणव्युत्पत्त्या च स्फोटशब्दो निष्पद्यते। स्फुट विकसने इति तौदादिकप्रकृतिः[4], "अकर्तरि च कारके संज्ञायाम् " इति सूत्रेण घञ् प्रत्ययः, स्फोट इति पदस्य निष्पत्तौ प्रकृतिप्रत्ययौ। अतः ध्वनिव्य-ङ्ग्यत्वे सति अर्थबोधकत्वं स्फोटस्य लक्षणं पर्यवसितं भवति। स्फोटवादे तु नागेशः पूर्वम् अष्टौ स्फोटभेदानवदत्, ततः तस्य वाचकत्वं निरधारयत् । मञ्जूषायां शक्त्याश्रयनिरूपणे सः, "ननु कोऽसौ शक्त्याश्रयः शब्दः इति प्रश्नमुद्भाव्य वर्णवाचकत्ववादिनां मतञ्च प्रत्याख्याय एको, नित्यो, विभुः, ध्वन्यभिव्यङ्ग्यः

---

1– वै०सि०ल०म०–शक्तिनिरूपणम्
2– स्फोटवादः – पृ० 5
3– शब्दकल्पद्रुमे
4– स्फुट, 260 भ्वादि
स्फुट 1374 तुलादि–
5– पा०सू० 3/3/19

स्फोटरूप: शब्द: शक्त्याश्रय:,स एव च वाचक: इति प्रत्यपादयत्[1] । अयञ्च ध्वन्यभिव्यङ्ग्य: शब्द: तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थ: विराट्पुरूषस्यापि हृदयरूपबाह्याकाशदेशस्थश्च,स च एको लाघवात् विभुश्च व्यापनात् । अस्य नित्यत्वन्तु पदे- पदे कीर्तितमेव । संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति[2] । अथ च अपायोपजनविकारिभि: वर्णै: भवितव्यम कूटस्थैरविचालिभिश्चेत्यादिभाष्यवचनैरपि नित्यत्वं दृढीभवति[3] । एवम्विधनित्योऽयं स्फोट: आन्तरप्रणवरूप एव, "ओङ्कार एव सर्वावाक्, सैषा स्पर्शोष्मभि: व्यज्यमाना बह्वी नानारूपा च भवति इतिश्रुते:[4] ।"

"परमलघुमञ्जूषायां तु स: परा-पश्यन्ती मध्यमावैखर्याख्यं वाचश्चातुर्विध्यं निरूप्य " तत्र मध्यमानादोऽर्थवाचक: स्फोटात्मकशब्दव्यञ्जकश्च इत्युदीरयामास[5] ।

कैयटमतम् -

कैयटेनापि भाष्यप्रदीपे स्फोटो व्यवस्थापित:,तद्यथा-"वैयाकरणा: वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । आनर्थक्ये तु प्रत्येकमुत्प-

---

1- वै०सि०ल०म०- शक्त्याश्रयनिरूपणम्

2- महाभाष्यम्- पस्पशाह्निकम्

3- म०भा० 1/1/45

4- वै०सि०ल०म०- स्फोटनिरूपणम्

5- परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।
वैखर्या हि कृतो नाद: परश्रवणगोचर: ।
मध्यमया कृतो नाद: स्फोटव्यञ्जक इष्यते ।
प०ल०म०- स्फोटविचार: ।

त्तिपक्षे यौगपद्येन उत्पत्त्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैव अभिव्यक्त्या समुदायाभावात् एकस्मृत्युपारूढानां वाचकत्वे "सरोरसः" इत्यादौ अर्थप्रतिपत्त्यविशेषणप्रसङ्गात तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्य इति ।[1] "

अतएव वर्णमालायाम् एकं पदम् , एकं वाक्यम् इत्यादिप्रतीतेः, तदेव इदंघटपदम्,तदेव इदं घटमानय इति वाक्यम् इत्यादिप्रतीतेश्च वर्णातिरिक्तमेकम् अखण्डं प्रकृतिप्रत्ययादिविभागरहितं पदं वाक्यञ्च वर्णव्यङ्ग्यमवश्यं स्वीकार्यम् । एवञ्च स्फोटाऽभिव्यक्तिसंभवे ध्वनिस्फोटयोर्मध्ये वर्णाङ्गीकारे गौरवादिति चेत्, भवतु त एव वर्णाः । दूरगतकोलाहलश्रवणे घत्वादीनां श्रूयमाणध्वनीनां दूरत्वदोषेणानभिव्यक्तिसंभवात्, त एव च तद्व्यञ्जकाः। तदेवम् एकस्माद् वाक्यात पदाद्वा अयमर्थो बुद्धः इत्यनुभवादखण्डः स्फोटो वाचकः । स च तत्तत्पदवाक्यभेदेनानन्त इत्येके। परे तु लाघवात् सर्वत्र एकः, प्रतीतिवैलक्षण्यञ्च व्यञ्जकवैलक्षण्यकृतम् । तद् यथा-

" यथामणिकृपाणादौ मुखमेकमनेकधा।

तथैव ध्वनिषु स्फोटः एक एव विभिद्यते ।।[2]

इत्यादि सर्वं प्रपञ्चितं नागेशभट्टेन स्फोटवादे ।

यद्यपि विदुषां शिरोमणिः नागेशः स्फोटसिद्धान्तस्य मुख्यं स्रोतः स्फोटायन ऋषिरेव इति वदति तथापि सः वाक्यपदीये,वैयाकरणभूषणे स्फोटतत्त्वनिर्णये, स्फोटसिद्धिन्यायविचारे च प्रतिपादितानि स्फोटसिद्धान्तसमर्थकानि वचनान्यपि

---

1- भाष्यप्रदीप- मा0सू0-4
2- स्फोटतत्त्वनिर्णयः ।।
3- स्फोटवादः:- अखण्डस्फोटः ।

सश्रद्धं स्मरत्येव । अत एव च प्रायेण सिद्धान्तसाम्यात् उद्धरणैः स्मृतत्वाच्च तेषां पृथग्रूपेणाभिनिवेशः प्रबन्धस्वरूपपरिवर्धक इति परिकल्प्य तान् सर्वान् प्रति सश्रद्धेन चेतसा साम्प्रतिकस्फोटतत्त्वपरायणानां शब्दविदां दर्शने दृष्टिपातं कुर्मः ।

आधुनिकविदुषां दृष्टिः-

---

अनेकैः आधुनिकभाषासमीक्षकैः प्रबन्धेषु निबन्धेषु च प्रसङ्गतः स्फोट-विषयकाः स्वविचाराः प्रकटिताः । " पाणिनीयव्याकरणे प्रमाणसमीक्षा" इत्यस्मिन् शोधप्रबन्धे श्रीमता रामप्रसादत्रिपाठिना त्रिमुनिमतं,भर्तृहरिनागेशादिभिः विस्तृतम् स्फोटसिद्धान्तम्,अथ च परा-पश्यन्ती मध्यमा वैखर्याख्यं वाचश्चातुर्विध्यम्, अष्टविधस्फोटपरिकल्पनमुरीकृत्य तद्भेदे प्रमाणत्वेन पाणिनिसूत्राणि चोपस्थापितानि। अतोऽन्यत्र द्वात्रिंशत् संख्याकान् स्फोटभेदान् परिकल्प्य " व्याकरणदर्शन भूमिकायाम् षोडश स्फोटा इति कथनञ्च न संख्यावधारणपरम् अपितु उपलक्षणपरमिति विभाव्यतां सुधीभिः"[1] इति चालिखत् सः स्वप्रबन्धे।

अय्यरमहोदयेन स्वसम्पादिते " भर्तृहरि "नामके ग्रन्थे " डॉक्ट्रिन आफ स्फोट " इति प्रकरणे ब्रह्मकाण्डस्य मुख्यसिद्धान्ताः संक्षिप्तरूपेण निदर्शिताः । शब्दतत्त्वं यदा ध्वनिप्रकाशितं भवति तदैव प्रकाशरूपः स्फोटः प्रतीतिविषयः स चाखण्ड एव। शब्दः अर्थश्च एकस्यैव अखण्डस्य स्फोटस्य बुद्धिसंवेद्यं रूपद्वयम् । "गंङ्गानाथ झा शोध संस्थानपत्रिकायां प्रकाशिते " दि डाक्ट्रिन आफ स्फोट" इति निबन्धे तु सः मण्डनमिश्रकृताम् " स्फोटसिद्धिमेवाश्रितवान्।लघुशरीरेऽप्य-स्मिन् प्रायेण सर्वान् मुख्यान् विचारविषयान् संगृह्य तेन कुमारिलभट्टाभिमतान् प्रतिवादितर्कान् प्रत्याख्याय स्फोट एव प्रतिष्ठापि[2] । एवमेव डॉ० गौरीनाथ-

---

1- पा०प्र०स०- शब्द०च०पु०

2- दि डाक्ट्रिन आफ स्फोट-अय्यर

शास्त्रिणापि" दि फिलासफी आफ वर्ड एण्ड मीनिंग " इति ग्रन्थस्य पञ्चमाध्याये वाक्यपदीयमनुसृत्यैव वर्णपदवाक्यानां विमर्शः कृतः ।

डॉ० एस०डी०जोशी महोदयेन तु "वैयाकरणभूषणसारस्य" स्फोटनिर्णयमाङ्गलभाषायामनूद्य नवीनपद्धत्या व्याख्यातम् । वाक्यपदीयग्रन्थावगाह्य तेन निष्कर्षरूपेण निगदितं यत्-[1]

1- हरिः ब्रह्मकाण्डे नववारं स्फोटशब्दं प्रायुंक्त ।

2- स्फोटध्वनिसम्बन्धे हरिणा स्पष्टं मतं न प्रतिपादितम् ।

3- वैयाकरणाः पदे वाक्ये च एकत्वप्रतीत्या अनयोर्भेदपक्षमेव स्वीकुर्वते।

4- शब्दे एकत्वप्रतीतिः विशुद्धधारणा रूपा एव ।

5- शब्दब्रह्म, शब्दः स्फोटश्च एकस्यैव नित्यतत्त्वस्य नामत्रयम् । अत एव च वाक्यपदीयस्य प्रथमकाण्डं ब्रह्मकाण्डमिति व्यपदिष्टम्।[2]

तत्र भवान् हरिशङ्करजोशी तु " प्रतिभादर्शनाभिधे स्वकीये भाषातत्त्वशास्त्रीये ग्रन्थे स्फोटविषये किञ्चित परम्पराप्रतिकूलं व्यनक्ति। स्फोटस्थापनाविषये एषां मतमस्ति यत् भारतीयभाषातत्त्वशास्त्रिणां चिन्तनपरम्परायाः प्रतीकभूतः स्फोटसिद्धान्तः । जोशीमहोदयेन औदुम्बरायणऋषिं स्फोटप्रवर्तकं स्वीकृत्य यास्कपतञ्जलिदीक्षितनागेशप्रभृतीनां मतं गर्हितम्,शब्दकौस्तुभे स्फोटवादे च अष्टविधस्फोटकल्पनमतीवाहितकरं कार्यम् दीक्षितनागेशयोरिति। एवमेव अनेनानेकत्र वैयाकरणान् वाग्वाणैः प्रहृत्य स्फोटवादः सांख्ययोगदर्शनस्य परिलब्धिरिति तैन प्रतिपादितम्[3] । औदुम्बरायणानन्तरम् भर्तृहरिरेव तस्य कृते श्रद्धास्पदमभूत ,

---

1- "स्फोटनिर्णय आफ कौण्डभट्ट "

2- स्फोटनिर्णय आफ कौण्डभट्ट-पृ0 29-46

3- प्रतिभादर्शनम् - 301-33

तमेव च प्रशंसन्नाह सः धन्यवादार्हाः खलु भर्तृहरिमहाभागाः यैः स्फोटसम्बन्धिनः विविधान् विषयान् प्रकाश्य न केवलं वाक्यस्फोटस्य एव दार्ढ्यं दर्शितमपितु स्फोट-सामान्यस्यापि भव्यं वैज्ञानिकं भवनं व्यवस्थापितम् । स्फोटविषये तस्य मतमस्ति यत् प्रत्येकं शब्दस्य चरमो ध्वनिः समेषां ध्वनीनां चित्रं समूहरूपेण उपस्थापयति, इदमेव च संभूयमानं ध्वनिचित्रम् =प्रकाशचित्रम् = स्फोट इति। पाणिनीय-वैयाकरणास्तु स्फोटस्य चित्ररूपतां पूर्वमेव उरीकृतवन्तः । किन्तु स्फोटप्रोतः सांख्ययोगदर्शनमिति तेषां कथनमुन्मत्तप्रलाप एव, यतोहि " प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः[2] " इति सांख्यसिद्धान्तेन स्फोटस्य निषेधे सति शब्दानित्यत्वमेव भवति प्रतिष्ठितम् । योगदर्शने तु समर्थितः स्फोटसिद्धान्तः, यथा अस्माभिरपि उद्धृतं पातञ्जयोगशास्त्रम्[3] । किन्तु सांख्ययोगौ उभे अपि दर्शने स्फोट प्रतिपादिके इति जोशीमहाशयानाम् स्वच्छन्दा स्वकीया च परिकल्पना, सा च परम्पराविरुद्धत्वादुपेक्ष्या एव इति ।

भारतीयपाश्चात्त्यविचारकाणां मतम् -

स्फोटसिद्धान्तस्य पारम्परिकसमुपासकैः तस्य तत्त्वमीमांसीयं स्वरूपमेव अधिक सम्मानितम् । किन्तु प्रायः परिवर्तनप्रकृतयः भवन्ति विचार-वृत्तयः, अतएव आधुनिकैः पाश्चात्त्यतत्त्वविद्भिः ज्ञानमीमांसीयः भाषा-वैज्ञानिकः पक्ष एव दृढीकृतः । डॉ० कीथमहोदयस्य मतमस्ति यत " वैयाकरणाः शब्दस्य नित्यस्वरूपप्रतिष्ठापकमेकम् रहस्यमयं तत्त्वं स्फोटः, कार्यशब्दश्च तस्यैवाभिव्यक्तिरिति आमनन्ति।[4] एवमेव म०म० कृष्ण वासुदेव आयंगरः व्यलेखि

---

1- प्रतिभादर्शनम्- 334-35

2- साख्यसूत्रम्- 5

3- पातञ्जलयोगशास्त्रम् - 3/17

4- संस्कृत साहित्य का इतिहास- पृ० 458-59

तमेव च प्रसंगेन्नाह सः धन्यवादार्हाः खलु भर्तृहरिमहाभागाः यैः स्फोटसम्बन्धिनः विविधान् विषयान् प्रकाश्य न केवलं वाक्यस्फोटस्य एव दार्ढ्यं दर्शितमपितु स्फोट-सामान्यस्यापि भव्यं वैज्ञानिकं भवनं व्यवस्थापितम् । स्फोटविषये तस्य मतमस्ति यत् प्रत्येकं शब्दस्य चरमो ध्वनिः समेषां ध्वनीनां चित्रं समूहरूपेण उपस्थापयति, इदमेव च संभूयमानं ध्वनिचित्रम् =प्रकाशचित्रम् = स्फोट इति। पाणिनीय-वैयाकरणास्तु स्फोटस्य चित्ररूपतां पूर्वमेव उरीकृतवन्तः । किन्तु स्फोटप्रोतः सांख्ययोगदर्शनमिति तेषां कथनमुन्मत्तप्रलाप एव, यतोहि " प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः[2] " इति सांख्यसिद्धान्तेन स्फोटस्य निषेधे सति शब्दानित्यत्वमेव भवति प्रतिष्ठितम् । योगदर्शने तु समर्थितः स्फोटसिद्धान्तः, यथा अस्माभिरपि उद्धृतं पातञ्जयोगशास्त्रम्[3] । किन्तु सांख्ययोगौ उभे अपि दर्शने स्फोट प्रतिपादिके इति जोशीमहाशयानाम् स्वच्छन्दा स्वकीया च परिकल्पना, सा च परम्पराविरुद्धत्वादुपेक्ष्या एव इति ।

भारतीयपाश्चात्त्यविचारकाणां मतम् -

स्फोटसिद्धान्तस्य पारम्परिकसमुपासकैः तस्य तत्त्वमीमांसीयं स्वरूपमेव अधिक सम्मानितम् । किन्तु प्रायः परिवर्तनप्रकृतयः भवन्ति विचार-वृत्तयः, अतएव आधुनिकैः पाश्चात्त्यतत्त्वविद्भिः ज्ञानमीमांसीयः भाषा-वैज्ञानिकः पक्ष एव दृढीकृतः । डॉ० कीथमहोदयस्य मतमस्ति यत " वैयाकरणाः शब्दस्य नित्यस्वरूपप्रतिष्ठापकमेकम् रहस्यमयं तत्त्वं स्फोटः, कार्यशब्दश्च तस्यैवाभिव्यक्तिरिति आमनन्ति[4]। एवमेव म०म० कृष्ण वासुदेव आयंगरः व्यलेखि

1- प्रतिभादर्शनम्- 334-35
2- सांख्यसूत्रम्- 5
3- पातञ्जलयोगशास्त्रम् - 3/17
4- संस्कृत साहित्य का इतिहास- पृ० 458-59

यत् "ध्वनिभिन्नः मूलभूतः शब्दः स्फोटः स च वक्तुरभिप्रायं श्रोतृदेशं यावद् प्रापयति ।

भाषावैज्ञानिकः "ए० एच० गार्डिनर " महोदयोऽपि वाक्यवादस्य समर्थकत्वात् स्फोटसिद्धान्तप्रतिपादक इति वक्तुं शक्यते। येन च कस्यचिदपि अभिधेयस्य पूर्णरूपेणाभिव्यक्तिः भवति तदेव च वाक्यमिति एषां मतम् । "स्पष्ट-मेतद् यत् केवलम् उच्चरितवर्णाः एव भाषा न भवति " इति श्रीतारापुरवाला महाभागानां कथनमपि वर्णातिरिक्तस्य शब्दस्य समर्थनपरकमेव। विचारः भाषा च एकस्यैव मूलतत्त्वस्य व्यावहारिकं पक्षद्वयम्, यथा ज्ञानस्य चरमं रूपं भाषेति तथैव ज्ञानमपि भाषायाः मूलसृष्टिरिति[2] । एवमेव "हैरोल्ड जी०कावर्ड " महोदयेन " "स्फोट थ्योरी आफ लैंग्वेज " इत्यस्मिन् ग्रन्थे, अथ च डॉ० गौरीनाथ शास्त्रिणापि "ए स्टडी इन दि डायलेक्टिक्स आफ स्फोट" इति पुस्तके स्फोटविषये भाषावैज्ञानिक पक्ष एव समर्थितः । शोध-पत्रिकासु प्रकाशिताः विविधनिबन्धाः अपि विषयेऽ-स्मिन् सहायकाः सन्ति।

इदमत्र तत्त्वं यत् एतावत् पर्यन्तं विवेचितं ध्वन्यभिव्यङ्ग्यं स्फोटात्मकं शब्दतत्त्वं सत्यम्, ध्वनिरूपाभिव्यञ्जकनिमित्तकम् नानात्वमसत्यञ्च। वर्णा-नुपूर्वीक्रमं परिहृत्य ज्ञानरूपमधिष्ठितं शब्दतत्त्वं सम्यक् परिज्ञाय निःश्रेयसोऽवाप्तिरे शब्दविदां प्रतिपाद्यम् । यथा कायमनसोः शुद्धिकारिणः विविधक्रियाकलापाः परमा-त्मनः साक्षात्कारे सहायकाः सन्ति तथैव प्रकृतिप्रत्ययक्रियाकारकादीनां परिज्ञान-मपि शब्दब्रह्मतादात्म्यप्राप्तये उपायभूतमेव। शाब्दिकसम्प्रदायसंस्थापितं शब्द-ब्रह्मसायुज्यं स्तुत्यं श्रेयस्करञ्च। अथ च शब्दोपासना जगज्जनन्याः दुर्गायाःस्तुतिः। अत एव सुधीसमुदायः शब्दसाधनानिरतो भवेदिति।

---

1- ए डिक्शनरी आफ संस्कृतग्रामर-

2- दि साइंस आफ लैंग्वेज

"शुभं भूयात् "

## शब्दस्य ज्ञानमीमांसीयसमीक्षा

1- शब्दस्य महत्त्वम्

2- शब्दस्य व्युत्पत्तिः स्वरूपञ्च

3- शाब्दिकमतम्

4- नैयायिकमतम्

5- मीमांसकमतम्

6- सांख्यमतम्

7- शब्दविषयकमन्येषां मतम्

8- शब्दस्य द्रव्यत्वं गुणत्वं वा

9- शब्दनिष्पत्तिप्रक्रिया

10- शब्दस्यप्रामाण्यम्

11- शब्दप्रमाणस्य लक्षणम्

12- शब्दादर्थबोधः

13- अर्थः

14- अर्थस्य बौद्धता

15- अन्विताभिधानम्

16- अभिहितान्वयः

17- अर्थस्य द्वैविध्यम्

18- शाब्दबोधाकरः

19- शाब्दबोधस्य निष्पत्तिप्रक्रिया

"शब्दस्य ज्ञानमीमांसीयसमीक्षा"

शब्दस्य महत्त्वम् -

विविधरूपायामस्यां सृष्ट्यां सर्वोत्कृष्टकृतिर्मानवः शब्देनैव स्वाभीष्टमुपादत्ते, जिहासितं जहाति, किं बहुना सम्पूर्णा एव सामाजिकी व्यवस्था शब्दाश्रिता एव, धर्माधर्मप्रतिपादनम्, गुरूशिष्योपदेशपरम्परा, स्वार्थ-परार्थप्रतिपादन प्रवृत्तिश्च सर्वमेतच्छब्दप्रकाशाभावे असंभवं स्यात्, भुवनत्रयमपि जन्मान्धवत् व्यवहारशून्यमेव तिष्ठेत्। उदीरितञ्च मनीषिप्रवरेण दण्डिना-

इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् ।

यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।[1]

कस्कोऽपि मनुष्यः स्वमनोगतान् भावान् सत्यवसरे मनुष्यान्तरं यदा बोधयितुकामो भवति तदा मनुष्यान्तरमनसा सम्बन्धुं प्रयतते, वक्ता च विदधाति प्रयत्नं तथा कर्तुम्, स च प्रयत्नः कर्मेन्द्रियजन्यव्यापाररूपः । तेन च यत्नेन वर्णात्मकः शब्दः प्रादुर्भवति। तस्यैव शब्दस्य श्रोत्रेन्द्रियद्वारा परकीयमनसा सम्बन्धो भवति। तच्छब्दद्वारैव परः परकीयमनोगतान् भावान् स्वबुद्धिविषयगतान् विदधाति। अनादिरेषा शब्दभावना प्रतिपुरूषं स्वकीयं रूपमजहती विलोक्यते। न हि बालः स्थानकरणाद्यभिघातार्थं प्राणमूर्ध्वं नेतुं केनचित् शिक्ष्यते, किन्तु अनादिसंस्कारवशात् तया शब्दभावनया प्रेरितो वर्णान्

---

1- काव्यादर्शः 1-4

उच्चारयितुं प्रभवति। किं बहुना जगत्यस्मिन सर्वोऽपि संप्रत्ययः शब्दाश्रित एव यथाह हरिः -

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते ।।[1]

पुनश्च शब्दतत्त्वाभावे तपःपूतमहर्षीणाम् अन्तःप्रज्ञया समुद्भूताः सर्वविज्ञानागारात्मकाः वेदाः अप्राप्ता एव स्युः । भारतीयजीवने सत्यं शिवं सुन्दरमित्यभिधेयानां मूलभूतादर्शानां प्रतिपादनं शब्देनैव क्रियते। संस्कृत-वाङ्मये शब्दः न केवलमर्थवाचकत्वेन स्वीकृतोऽस्ति अपितु प्रमाणत्वेन अथ चातीव व्यापके दार्शनिकाध्यात्मिकसत्तार्थेऽपि अस्य प्रयोगः दृश्यते।[2] व्याकरणदर्शने शब्दस्य द्विविधं रूपमुपगम्यते- ध्वन्यात्मकं स्फोटात्मकञ्च । तत्र श्रोत्रेन्द्रियेण गृह्यमाणः ध्वन्यात्मकः, ध्वनिना अभिव्यज्यमानः नित्यो विभुश्चस्फोटात्मकः ।[3]

शब्दस्य व्युत्पत्तिः स्वरूपञ्च -

वाग्व्यवहारेण अर्थबोधनमेव शब्दस्य प्रयोजनम् । भारतीयपरम्परानुसारेण

---

1- वा0प0 1/124

2- तस्माद यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्यप्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ।।
वा0प0- 1/131

3- ध्वनिः स्फोटश्च शब्दानाम् ।
म0भा0 1/1/70

अनादिरेषा प्रक्रिया। विविधेष्वर्थेषु प्रयुज्यमानस्य शब्दस्यास्य व्युत्पत्त्य-नुसारेण ध्वनिगतं व्याख्यानं पञ्चविधं शक्यम्, तथाहि-

1- शब्द्यते = आविष्क्रियते अर्थोऽनेनेति शब्दः अर्थप्रकाशकमिति यावत्[1]

2- शब्द्यते = ध्वनिनाभिव्यज्यते इति शब्दः, ध्वनिनाभिव्यक्तमर्थरूपं वाक्तत्त्वमिति यावत्

3- शब्द्यते = अभिव्यज्यते ब्रह्म येन सः शब्दः परब्रह्मप्रतिपादकः प्रणव इति यावत् ।

4- शब्दनमिति[2] शब्दः उच्चारणमितियावत्

5- शब्दयति प्रकाशयति स्वार्थमिति सः शब्दः ।

शाब्दिकमतम् -

महर्षिपतञ्जलिस्तु कोऽयं शब्दः इति जिज्ञासायाम् "अथ गौरित्यत्र कः शब्दः इति प्रश्ने द्रव्यस्य क्रियायाः गुणस्य आकृतेश्च शब्दत्वमाशङ्क्य प्रत्याख्याय च "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, सःशब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते"[3] इत्याह।

---

1- अकर्तरि च कारके संज्ञायाम् - पा०सू० 3-3-19 इत्यनेन घ प्रत्ययः ।

2- एरच्- पा०सू० 3-3-56
शप्यते इति शब्दः, शप् आक्रोशे, "शाशपिभ्यां ददनौ" -उणादिसूत्रम्-546। किन्तु निरुक्तिरियं स्वरूपपरका एव।

3- व्या०म०भा० पस्पशाह्निकम् ।

अत्र येनोच्चारितेन इत्यस्य प्रकाशितेन इत्यर्थसत्त्वात् प्रथमलक्षणे स्फोटः शब्दः इति सूच्यते। अथवा प्रतीतपदार्थकः "इत्यनेन ध्वनिः शब्द इति निर्दिश्यते-

"ध्वनिस्फोटश्च शब्दानाम्"[1]

तथा च -

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।[2]

अत्र प्रदीपः -"वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाक्यस्त वा वाचकत्व मिच्छन्ति, वर्णानां प्रत्येक वाचकत्वे द्वितीयादिवर्णोच्चारणानामानर्थक्यप्रसङ्गात्, आनर्थक्ये तु प्रत्येकम् उत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्। अभिव्यक्तिपक्षे तु क्रमेणैवभिव्यक्त्त्या समुदायाभावादेकस्मृत्युपारूढानाञ्च वाचकत्वे "सरो रसः" इत्यादौ अर्थप्रतिपत्त्यविशेषप्रसङ्गात् तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः।[3] उच्चारितेन प्रकाशितेनेत्यर्थः।

उपर्युक्तं शब्दस्य लक्षणं महर्षिणा "गौरित्यत्र कः शब्दः "इति जिज्ञासायामेव कृतम्, अस्य सामान्यार्थस्य येनोच्चारितेन सम्प्रत्ययो भवति इत्येव। अस्यां परिभाषायाम् उच्चारणं सम्प्रत्ययश्च उभे अपि शब्दस्य लक्षणमेव प्रकाशयतः। अतः उच्चरितत्वे सति अर्थप्रत्यायकत्वमेव शब्दस्य लक्षणम् । अत्रोच्चारणमिति

---------------

1- व्या०म०भा०- 1-1-70
2- वा०प०- 1/44
3- म०भा०प्र०न०वा० 1/1/1

शब्दः शब्दस्य ध्वन्यात्मकं स्वरूपम्, सम्प्रत्ययशब्दश्च तस्य सांकेतिकं रूपं प्रदर्शयति। अतः भाष्यकारानुसारेण द्रव्यगुणक्रियाजातिव्यतिरिक्त एव शब्दः।[1] अपर-शब्दपरिभाषायाम् महर्षिः प्रतीतिपदार्थकं ध्वनिं शब्दत्वेन व्यवहरति। प्राचीन-कालादेव संस्कृतवाङ्मये प्रतीतशब्दः स्पष्टतार्थक एव।[2] शब्दः ध्वन्यात्मना एव स्वस्वरूपं लभते, अत एव पदार्थबोधकः ध्वनिसमूह एव शब्दः, पदार्थबोधकतैव च शब्दस्य व्यावहारिकोपयोगः।[3] मीमांसाशिरोमणिः कुमारिलभट्टोपि अर्थप्रत्यायकत्वमतमेव समर्थयति।[4] एवमेव दार्शनिकप्रवरेण भर्तृहरिणापि समेषामर्थानाम् आधाररूपेण शब्द एव स्वीक्रियते। तस्य मते जगत्यस्मिन् न किमपि ज्ञानं शब्दनिरपेक्षम् अथ च शब्द एव सर्वासां शक्तीनामाश्रयः।[5] जगतः मूलकारणमपि शब्दतत्त्वमेव, शब्दतत्त्वादेव च सम्पूर्णासृष्टिरियं विवर्तिता। यथाह वाक्यपदीये सः:-

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥[6]

---

1- व्या०म०भा० पस्पशाह्निकम्

2- प्रतीतशब्दप्रयोगः स्पष्टत्वम्। अर्थशास्त्र 2/10

3- अर्थगत्यर्थः शब्दप्रयोगः। अर्थप्रत्ययिष्यामीति शब्दः प्रयुज्यते। व्या०म०भा० 1/1/43

4- मीमांसासूत्रम् 1-3-8, सर्वो हि शब्दः अर्थप्रत्यायनार्थ प्रयुज्यते, टीकायाम्।

5- शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी। वा०प० 1/118

6- वाक्यपदीयम् 1/1

वैयाकरणानां स्फोटसिद्धान्तः एनामेव तात्त्विकीमवस्थां प्रतिपादयति। पतञ्जलिस्तु स्फोटः शब्द ध्वनिः तस्य गुणः इति स्वीकरोति। शब्दे प्रतीयमानाः अल्पत्वमहत्त्वादिधर्माः ध्वनिगताः, ध्वन्यभिव्यक्तः शब्दस्तु तद्व्यतिरिक्त एव, स्पष्टश्चैतत् सर्वं महाभाष्ये।[1] अयं ध्वनिव्यङ्ग्यः वाचकः शब्दः तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः, विराट्पुरूषस्यापि हृदयरूप-बाह्याकाशदेशस्थश्च, स चैकोे लाघवात् विभुश्च व्यापनात्।[2] महर्षियास्केनापि शब्दस्य व्यापकत्वमेव समर्थितम्।[3]

नैयायिकमतम् –

नैयायिकास्तु शब्दः आकाशस्य गुणः[4] तस्य च श्रोत्रेन्द्रियेण समवायसन्निकर्षेण ग्रहणमिति आमनन्ति। ध्वन्यात्मकवर्णात्मकभेदेन च स द्विविधः[5] – मृदङ्गमेघगर्जनादयः ध्वन्यात्मकाशब्दाः, वर्णात्मकास्तु शब्दाः बाह्याभ्यान्तर-प्रयत्नसहकृतेन मुखगुहायां तत्तत्स्थानेषु वायवाघातेन कण्ठताल्वाद्यभिघातजन्याः

---

1– व्याоमоभा तपरस्तत्कालस्य पाоसूо 1-1-70
2– वैоसिоलоमо- पृо 163
3– व्याप्तिमत्त्वात्तु शब्दस्य। निरूक्त 1/1/4
4– आकाशस्य तु गुणः शब्दः ।
न्यायमंजरी, भाग-2 पृо 56
5– शब्दोऽम्बरगुणः श्रोत्रग्राह्यः ।
प्रशस्तपादभाष्यम्, पृо 692

निष्पाद्यन्ते। आचार्यमम्मटोऽपि एतदेव मतं समर्थयति। न्यायलीलावत्यामपि शब्दस्वरूपजिज्ञासासमाधानं क्रमजन्यवर्णसमूहेनैव कृतमस्ति, कण्ठताल्वाद्यभिघातजन्यवर्णसमूहः शब्दः, स एव च वाचकः इति ।

मीमांसकमतम् –

मीमांसकास्तु " अथ गौरित्यत्र कः शब्दः गकारौकारविसर्जनीयाः इति भगवान् उपवर्षः इति कण्ठताल्वाद्यभिघातानां श्रवणेन्द्रियविषयाणाम् वर्णानामेव शब्दत्वं वाचकत्वञ्च स्वीकुर्वन्ति। प्रकरणपञ्चिकायां शालिकोऽपि "कः शब्दोऽभिमतः ? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात् इत्यादिनां श्रोत्रग्राह्यः वर्ण एव शब्दः इति प्रतिपादयति। शाबरभाष्येऽपि पक्षोऽयम् स्पष्टीकृतोऽस्ति। श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः " इति। अन्यस्मिन् दिनेऽनुभूयमानस्य सोऽयम् इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे "तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति"न्यायात् पराभिमताशुविनाशित्वव्यतिरेके सिद्धे शब्दस्य नित्यत्वपर्यवसानम् ।

तस्मान्न यद्धर्मोऽस्ति विनाशी कश्चिदीदृशः ।
तेन नित्यत्वसिद्धं वर्णनित्यत्ववादिनाम् ।।[4]

---

1- श्रोत्रग्राह्यो गुणः शब्दः, आकाशमात्रवृत्तिः, स द्विविधः- ध्वन्यात्मकोवर्णात्मकश्च तर्कसंग्रहे- तर्कदीपिकायाम् ।

2- मी0द0 1/5 शा0भाष्यम्

3- शाबरभाष्यम् 1/1/5

4- श्लोकवार्तिक 305

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, इति सूत्रेणापि महर्षिजैमिनिना[1] शब्दस्य नित्यत्वपक्ष एव दृढीकृतः ।

सांख्यमतम्-

यद्यपि सांख्यनये शब्दस्वरूपविषयकं किमपि विशिष्टव्याख्यानं नोपलभ्यते तथापि तन्मतानुसारेण सम्पूर्णाः जागत्काः पदार्थाः त्रिगुणात्मप्रकृत्या एव परिणामभूताः । मूलप्रकृतेः विकारभूतौ महदहङ्कारौ, ततः क्रमेण विकसिताः शब्दतन्मात्रा एव शब्दस्य आश्रयाः । अतः परम्परया त्रिगुणात्मकप्रकृतेः परिणामभूतः शब्दोऽपि त्रिगुणात्मक एव । आचार्यकुमारिलभट्टेन शब्दविषयका विविधपक्षाः इत्थमुपन्यस्ताः-

त्रिगुणः पौद्गलो वा यमाकाशस्याथवा गुणः ।
वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः ।।
पदवाक्यात्मकः स्फोटः सारूप्यान्यनिवर्तने ।।[2]

शब्दविषयकमन्यमतम्-

प्रातिशाख्यग्रन्थेषु- वायुरेव शब्दः,वायुः खात,शब्दस्तत इत्यादिवचनैः वायुपरिणामत्वेन शब्दोऽभिमतः । सर्वव्यापकत्वे सत्यपि वायुः साधनविशेषैः शब्दस्वरूपं निदर्शयति। एवम् केश्चिद् वायोः,केश्चिदणूनां केश्चिच्च-

1- मीमांसासूत्रम्- 1/1/5

2- श्लोकवार्तिके, शब्दनित्यताधिकरणम्- 319-20

ज्ञानस्य शब्दस्वरूपता परिकल्पिता[1]। जैननये पुद्गल एव परासत्ता, अतः पुद्गलोत्पन्नः अणुपरिणामः शब्दः, स च द्रव्यम्।

शब्दस्य द्रव्यत्वं गुणत्वं वा -

पूर्वमीमांसादर्शने ध्वनिरूपस्य शब्दस्य द्रव्यत्वं सिद्धान्तितम्। तथाहि "शब्दो द्रव्यं सूक्ष्मे सत्यनाश्रितत्वात् कालवत्, इत्यनुमानेन शब्दे द्रव्यत्वं साध्यते।[2] "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इत्युक्त्या भर्तृहरिणापि वायोरणूनां परिणामः शब्दः इति पक्षे शब्दस्य द्रव्यत्वं, ज्ञानस्य पक्षे तु गुणत्वमपि स्वीकृतम्। "अतत्स्थैश्च गुणैः समासो वाच्यः" इति वार्तिके "नदीघोषः" "पटहशब्दः" इत्युदाहरता भाष्यकृतापि शब्दस्य गुणत्वं स्वीकृतमेव।[3] नागेशस्तु तारत्वादिगुणाश्रेण शब्दस्य द्रव्यत्वम् आकाशरूपद्रव्याश्रितत्वाच्च तस्य गुणत्वमपि स्वीकरोति।[4] नैयायिकैस्तु शब्दस्य गुणत्वमेव स्वीक्रियते।

शब्दनिष्पत्तिप्रक्रिया-

भवतु शब्दो नित्यो वा अनित्यो वा, विभुर्वा देशविशेषप्रतिबद्धो वा, द्रव्यं वा गुणो वा, तस्य सार्वकालिकी सार्वत्रिकी वा उपलब्धिः नैव भवति इति

---

1- शुक्लयजुः प्रातिशाख्यम्-अ01-सू0 6-7
2- मानमेयोदये
3- म0भा0, मा0सूत्र"।
4- वै0सि0ल0म0-शक्त्याश्रयनिरूपणम्।

तु निर्विवादम्, अपितु यदा यत्र च अभिघातादिभिः निष्पाद्यते तदैव तत्रैव च स उपलभ्यते। निष्पत्तिरियं तस्योत्पत्तिरूपा वा भवतु अभिव्यक्तिरूपा वा इत्यन्यत्। तत्र भेरीदण्डाद्यभिघातजः ध्वन्यात्मकः शब्दः स्वनिष्पत्तौ नाधिकां प्रक्रियामपेक्षते। कण्ठताल्वाद्यभिघातनिष्पाद्यस्य व्यक्तवागात्मकस्य वर्णात्मकस्य अर्थबोधनार्थम् वक्त्रा उच्चार्यमाणस्य शब्दस्य निष्पत्तौ पुनः भवति काचिद् बौद्धिकी शारीरिकी च प्रक्रिया,यदन्तः प्राणः शरीराङ्गानि च इत्येतत्सर्वम् व्याप्रियते। यद्यपि व्याकरणग्रन्थेषु शब्दनिष्पत्तिप्रक्रियाविषयकं नाधिकं लभ्यते तथापि पाणिनीयव्याकरणसम्बद्धा पाणिनीयशिक्षा विषयमिमं सुष्ठु चित्रयति। तद्यथा–

आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।।
सोदीर्णो मूर्ध्न्यभिहतःवक्त्रमापद्य मारुतः ।
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः।[1]
स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः ।।

अस्यायमर्थः आत्मा अन्तःकरणं बुद्ध्या स्ववृत्त्या अर्थान् संस्काररूपेण स्थितान् पदार्थान् समेत्य विवक्षया तद्बोधनेच्छया मनः प्रेरयति। तच्चान्तःकरणप्रेरितं मनः कायाग्निं जठराग्निम् आहन्ति। स जठराग्निः मूलाधारस्थं पवनं

---------------

1- पाणिनीयशिक्षा- 6-9

प्रेरयति। ततः सः पवनः हृदयादिदेशान् अतिक्रामन् मुखमापद्य वक्तृप्रयत्नानुसारं तत्तत्स्थानेषु अभिघातेन वर्णान् जनयते इति। वक्तृप्रयत्नप्रेरितः प्राणः तत्तत्स्थानेषु आघातेन विवक्षानुसारं वर्णान् जनयति इति भावः । एतेन वर्णोत्पत्तौ प्राणशक्तेः ज्ञानशक्तेश्च योगदानं वायोः वर्णनिष्पादकत्वञ्चेति स्पष्टमेव ।

अत्रशिक्षायां "सोदीर्णोमूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः"। वर्णान् जनयते "इत्यस्य विवधव्याख्यानुसारं शब्दविषयकाणां विभिन्नानां मतानां समन्वयः कर्तुं शक्यते।

तत्र मारुतः तत्तत्स्थानाभिघातेन अपूर्वान् गुणरूपान् द्रव्यरूपान् वा शब्दान् उत्पादयति इत्येका व्याख्या। एतदनुसारञ्च अपूर्वशब्दोत्पत्तौ वायोः निमित्तकारणत्वमेव। अस्मिन् च व्याख्याने वैशेषिकमतं जैनमतञ्च समायाति। तथाहि वैशेषिकमते शब्दो गुण एव, स चाकाशवृत्तिः क्षणिकश्च। संयोगजः विभागजः शब्दजश्चेति त्रिविधोऽयं शब्दः।[1] तत्रोभयोः अभिघाताख्येन संयोगेन यः शब्दः जायते, सः संयोगजः,यथा भेरीदण्डयोः अभिघाताच्छब्दः। एवं द्वयोः विभागेन यः शब्दः,सः विभागजः,यथा- वंशादीनां विभागे चट्चटादिशब्दः। यस्तु शब्देनैव जायते सः शब्दजः शब्दः यथा जले लोष्ठादिप्रक्षेपेण आद्या एव वीचिः जायते वीच्यन्तराणि तु पूर्वपूर्ववीचिभिरेव जायन्ते, तथैव आद्य एव शब्दः संयोगेन विभागेन वा भवति। शब्दान्तराणि तु वीच्यन्तराणीव पूर्वपूर्व-शब्दैरेव जायन्ते। इमान्येव शब्दान्तराणि शब्दजशब्दाः। कण्ठताल्वादिषु तत्तत्स्थानेषु वाय्वभिघातेन उच्चार्यमाणाः

----------------

1- प्रशस्तपादभाष्यम्-शब्दप्रकरणम् पृ0 692

शब्दा अपि संयोगजा एव शब्दाः, तेषां निमित्तकारणञ्च वायुसंयोगः ।
एवञ्च वायोः गुणरूपापूर्वशब्दोत्पादकत्वम् वैशेषिकैः स्वीक्रियते।

जैननये शब्दाः द्रव्यरूपा एव, यथा पृथिव्यादीनाम् आरम्भकाः परमाणवः तथैव शब्दानामपि। इमे च शब्दभावेन परिणामिनः परमाणवः यदा वक्तृप्रयत्नेन समाहियन्ते तदा शब्दाः जायन्ते। एतन्मतेऽपि प्रयत्नप्रेरितस्य वायोः शब्दं प्रति निमित्तता अस्त्येव।[1]

प्रातिशाख्यग्रन्थेषु वायोरेव शब्दभावः प्रतिपादितः। मूलाधारात् मारूतो वक्त्रं प्रविश्य तत्तत्स्थानेषु अभिघाते सति वर्णान् जनयते, आत्मानमेव वर्णत्वेनाभिव्यनक्ति ।[2] यथा दुग्धम् अवस्थाविशिष्टं सत् दधिरूपेण परिणमति तथा मारूत एव अवस्थाविशेषविशिष्टः वर्णत्वेन परिणमति इति। इयञ्च व्याख्या द्वितीया। अस्यां शिक्षाकारमतं प्रातिशाख्यमतञ्च समायाति। हरिणापि वायोः शब्दरूपेण परिणामित्वं स्पष्टमुक्तम्[3] ।

सः मारूतः वक्त्रमापद्य तत्तत्स्थानाभिघातेन अन्तःस्थितमेव परात्मकं

---------------

1- अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
छायातपतमः शब्दभावेन परिणामिनः ।।
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीवप्रचीयन्ते शब्दाख्याः परमाणवः ।।
वा०प०- 1/110-11

2- वायुशात्, शब्दस्तत । शुक्लयजुः प्रा०शा० 1/6-7
वायुं प्रकृतिमाचार्याः । ऋक्तन्त्रे प्रथमप्रपाठके

3- वा०प० 1/108

सूक्ष्मशब्दं वर्णत्वेन अभिव्यनक्ति इति तृतीया व्याख्या। अयमेव च शाब्दिकानां सिद्धान्तः । तथाहि शाब्दिकनये वायुसंयोगः शब्दस्य व्यञ्जक एव, न तु उत्पादकः, यतः शब्दो नित्यः । यथा सन्नेव घटादिः दीपादिना प्रकाश्यते तथैव सूक्ष्मवागात्मना अन्तःस्थित एव नादः कण्ठताल्वाद्यभिघातेन तज्जन्यध्वनिना वा व्यज्यते। यदुक्तं हरिणा-

"अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते।।[1]

अयमेव सूक्ष्मशब्दः रवपरादिशब्दैः व्यवह्रियते।

भवतु यद्वा तद्वा, शब्दस्य वायुसंयोगव्यङ्ग्यत्वं तु सकलशाब्दिकसम्मतमेव इति वर्णान् जनयते इति शिक्षा-वचनस्य वर्णत्वेन शब्दम् अभिव्यनक्ति इति व्याख्यानम् उचितमेव।

एतदेव च व्याख्यानं मीमांसकानामपि,तथाहि मीमांसका अपि शाब्दिकवत् शब्दं नित्यमेव स्वीकुर्वते इति तस्य व्यञ्जक एव वायुसंयोगः नोत्पादकः ।

इदमत्रध्येयम् यत् शब्दनिष्पत्तिविषये अतिसूक्ष्मं विविच्यापि पाणिनीयशिक्षायां सुस्पष्टतया नोक्तं यत् किं रूपः शब्द इति। आपिशलशिक्षायां तु इदमित्थं रूपेण शब्दस्वरूपविषये शिक्षाकृता स्वसिद्धान्तः प्रतिपादितः। तथाहि-

---------------

1- वा०प० 1/112

आकाशवायुप्रभवः शरीरात्,

समुच्चरन् वक्त्रमुपैति नादः।

स्थानान्तरेषु प्रविभज्यमानः,

वर्णत्वमागच्छति यःसः शब्दः।।

तमक्षरं ब्रह्म परं पवित्रम् ।

गुहाशयं सम्यगुशन्ति विप्राः।

स श्रेयसा चाभ्युदयेन चैव,

सम्यक् प्रयुक्तः पुरूषं युनक्ति ।।

एतेन अन्तःस्थितस्यैव नादस्य कण्ठताल्वाद्यभिघातवशात् बाह्यशब्दरूपे परिणामः इति, शब्दस्य अक्षरत्वम् अर्थात् नित्यत्वमिति च सुस्पष्टमेव बोधितम् आपिशलशिक्षाकृता।

शब्दस्य प्रामाण्यम्-

सर्वेऽपि भारतीया आस्तिकदार्शनिका एकस्वरेण शब्दस्य प्रामाण्यमभ्युपगच्छन्ति, परन्तु शब्दस्य स्वरूपविषये, प्रामाण्यविधाविषये, अर्थविषये शब्दाज्जायमानस्य शाब्दबोधस्य आकारविषये, प्रक्रियाविषये च अस्त्येतेषां मतभेदः । अन्यदिदं यत् केचन शब्दाख्यमतिरिक्तं प्रमाणमातिष्ठन्ते इतरे च तं प्रमाणान्तरे अन्तर्भावयन्ति। एकञ्च शब्दो नाम प्रमाणस्य स्वतन्त्रा विधा

---

1- आपिशलशिक्षा- 1/1-2

इत्येतद्विषये एव एतेषां विमतिः न तु शब्दस्य प्रामाण्यविषये।

तत्र नैयायिकाः शब्दमतिरिक्तप्रमाणतया उद्घोषयन्ति । प्रमाणस्य एषा चतुर्थी विधा, तदाह न्यायसूत्रकारो गौतमः "प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणानि।" [1] मीमांसकाः औपनिषदाः सांख्याश्चापि शब्दस्य पृथक् प्रामाण्यमेव इच्छन्ति। अत एव प्रत्यक्षानुमानाभ्यामसाध्यम् प्रत्यक्षानुमानातीतमितियावत्- शब्दात्मकेन शास्त्रेण प्रमाणेन विषयीक्रियते इति "शास्त्रयोनित्वात्" [2] इत्यादिवचनैः, तथा च यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते, तद्वाक्यं प्रमाणमिति दर्शयन्ति वेदान्तिनः। [3] सांख्याचार्या अपि स्फुटमेव शब्दमतिरिक्तप्रमाणतया गणयन्ति, प्रतिपादयन्ति च अतिक्रान्तप्रत्यक्षानुमानमर्यादस्य वस्तुनो शब्देन सिद्धिम् । यथोक्तम् ईश्वरकृष्णेन-

दृष्टमनुमानमाप्तवचनं सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमाख्यातम् --------। [4]
अस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम्।। [5]

------------------

1- न्याय० सूत्र - 1/1/3
2- वे०सू० 1/1/3
3- वेदान्तपरिभाषा- आगमपरिच्छेदः ।
4- सां०का० 4
5- सां०का० 6

परमेतद् विषये काणादानां दर्शनं भिद्यते। ते हि शब्दस्य प्रामाण्य-मुरीकुर्वन्तोऽपि शब्दाख्यां प्रमाणस्य स्वतन्त्रां विधां नेच्छन्ति अपितु अनुमाने-नैव शब्दप्रमाणं गतार्थयन्ति। तदनुसारेण शब्दादनुमानमेव शब्दाज्जायमानो बोधः । (अनुमानात्मक एवेतियावत्,) अनुमानाकारश्चेत्थम्- एते पदार्थाः परस्परं संसर्गवन्तः, आकांक्षादिमत्पदैः स्मारितत्वात् "घटमानय" इतिपदार्थ-संसर्गवत् । यद्वा "घटमानय" इत्यादिपदानि तात्पर्यविषयस्मारितपदार्थसंसर्ग-ज्ञानपूर्वकाणि, आकांक्षादिमत्पदकदम्बकत्वात्, "घटमानय" इति पदकदम्बकवत्। तथा च वैशेषिकसूत्रम्- एतेन शाब्दं व्याख्यातम्[1] । अत्र एतेनेत्यस्य अनुमानात्मक-ज्ञाननिरूपणेन इत्यर्थः[2]। एतद्वैशेषिकानां मतं विश्वनाथेन भाषापरिच्छेदे पूर्व-पक्षतया इत्थमुपस्थापितम्-

"शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ।
अनुमाने गतार्थत्वादिति वैशेषिकं मतम्[3] ।।

वैयाकरणास्तावद् एतद्विषये बहुसम्मतं पूर्वोक्तं पक्षमेवानुमन्यन्ते। एते हि शब्दं न केवलं स्वतन्त्रं प्रमाणमेव मन्यन्ते अपितु प्रमाणवर्गे शब्दप्रमाणं प्रमाणान्तरापेक्षया अधिकं सम्मन्यन्ते, यथा च आह महाभाष्यकारः -

---------------

1- वै०सू० 9/2/3
2- वै०सि०ल०म०-शं०नि०टीकायाम पृ० 5।
3- न्यायसिद्धान्तमुक्तावली ।

"शब्दप्रमाणकाः वयम्, यच्छब्द आह तदस्माकं प्रमाणम्"[1] । भर्तृहरिणापि महताकारिका प्रघट्टकेन वाक्यपदीये शब्दस्य प्रामाण्यं व्यवस्थापितम् । यथाह सः -

" न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ।।[2]
चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।
आगमस्तमुपासीनो हेतुवादैः न बाध्यते।।[3]

अत्रैव प्रघट्टके वाक्यपदीयकृता अनुमानस्य अव्यवस्थितत्त्वम् अत एव च दुर्बलत्वम्, अनुमानाद्यपेक्षया आगमस्य श्रेष्ठत्वञ्चापि वर्णितमस्ति। एषु विषयेषु प्रत्यक्षमनुमानं वा न प्रसरति एवंविधा विषया आगमेनैव साध्याः। अतः आगमस्य अत्यावश्यकत्वञ्चापि तेन दर्शितम् । स्फुटमेतत् सर्वं वाक्यपदीये। तद् यथा-

अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।
भावानामनुमानेन प्रतिसिद्धिरतिदुर्लभा ।।
निर्ज्ञातशक्तेर्द्रव्यस्य तां तामर्थक्रियां प्रति।
विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ।।[4]
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।

---

1- व्या०म०भा० 1/1/1
2- वाक्यपदीयम् 1/30
3- वा०प० 1/41
4- वा०प० -132-33

अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥[1]
हस्तस्पर्शादिवान्धेन विषमे पथि धावता।
अनुमानप्रधानेन विनिपातो न दुर्लभः ।[2]
अतीन्द्रियानसंवेद्यान पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥[3]
यो यस्य स्वमिव ज्ञानं दर्शनं नातिशङ्कते।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ॥[4]

मञ्जूषायां नागेशेनापि स्फुटमेव शब्दस्य पृथक् प्रामाण्यं व्यवस्थापितम्। तत्र हि तेन शब्दादनुमानमेव इति वैशेषिकमतं पूर्वपक्षतया उपस्थाप्य अनेकाभिः युक्तिभिः विखण्डितम् ।[5] शाब्दबोधस्य अनुमानत्वविखण्डेन शब्दप्रमाणस्य अनुमानान्तर्भावविखण्डने वा सः मुख्यतया युक्तिद्वयमुपन्यास्थत् । तथाहि अनुमाने पक्षधर्मताज्ञानमपेक्ष्यते। शब्दस्तु पक्षधर्मताज्ञाननिरपेक्षो बोधं जनयति। अतः न शब्दोऽनुमाने अन्तर्भावमर्हति। अन्यच्च सिद्धिसत्त्वे अनुमानं न प्रभवति, प्रमाणान्तरेणार्थसिद्धिः अनुमितौप्रतिबन्धिका। सिद्धौ सत्त्यां सिषाधयिषायां सत्त्यामेव अनुमितिर्भवति न तु तां विना। शाब्दबोधस्तु सिद्धौ सत्त्यामपि

-------------------

1- वा०प० 1/34
2- तदेव 1/42
3- तदेव 1/38
4- वाक्यपदीयम् 1/39
5- वै०सि०ल०म०-शक्तिनिरूपणम् -

अनुभवसिद्धः,सिद्धिः शब्दजप्रत्ययं न प्रतिबध्नाति। किञ्च अर्थबाधोऽपि शब्दजप्रत्ययं न प्रतिबध्नाति। तदुक्तं-

" अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।"

अनुमितिंपुनःबाधः प्रतिबध्नातीति अनेकानि वैलक्षण्यानि सन्ति शब्दज-प्रत्यये अनुमित्यपेक्षया। तथा च मञ्जूषा- " न च तयोस्तादात्म्यस्वीकारे समव्याप्ततया शब्दादनुमानमेव स्यादर्थस्येति-प्रमाणान्तरत्वभङ्गः पक्षधर्मताज्ञानाद्यपेक्षतया तस्य प्रमाणान्तरत्वात सिद्धिसत्त्वे इच्छां विनापि बोधदर्शनाच्च।" विश्वनाथोऽपि न्यायसिद्धान्तमुक्तावल्यां शब्दादनुमानवादिनां वैशेषिकाणां मतं पूर्वपक्षतया उपन्यस्य एवं विखण्डितवान् —

" तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः"[2]।

अन्या सामग्री अनुमानस्य अन्या च शब्दस्य। व्याप्तिपक्षता धर्मादिज्ञान-रूपा अनुमानस्य सामग्री, शब्दजप्रत्ययस्य तु आकांक्षाज्ञानादिरूपा। व्याप्ति-पक्षधर्मताज्ञानादिरूपा अनुमानसामग्री शब्दजप्रत्यये नानुभूयते,फलबलात् कल्पने तु गौरवम्,अपितु आकांक्षाज्ञानादिरूपा ततो विलक्षणा एवं सामग्री शब्दबोधे अपेक्ष्यते। अतः सामग्रीवैलक्षण्यादनुमानं शाब्दबोधश्च इत्येते परस्परस्माद् विलक्षणे एव प्रत्ययस्य विधे इत्येतन्निकर्षः ।

कथेयं शब्दप्रमाणविषये शास्त्रकाराणाम् । प्राकृतसाधारणाः लौकिका

---------------

1- वै०सि०ल०म०-पृ० 48

2-

अपि पदे-पदे शब्दं प्रमाणतया आश्रयन्ति। लौकिकानामस्माकमपि दैनिके व्यवहारे।[1] भूयस्यः प्रवृत्तयो निवृत्तयः, सुखदुःखद्वेषेर्ष्यादिरूपाः मनोवृत्तयश्च शब्दानुपातिन्य एव भवन्ति। न हि शब्दमुपेक्ष्य प्रत्यक्षप्रमाणमात्राश्रयणेन प्रत्यक्षानुमानमात्राश्रयणेन वा दैनिकाः सर्वे व्यवहाराः निर्वोढुं शक्याः।

शब्दप्रमाणस्य लक्षणम्-

यद्यपि पदात्मकः वाक्यात्मकश्च सर्वोऽपि शब्दः अर्थबोधं जनयति तथापि न सर्वः प्रमाणम्, अपितु आप्तोक्त एवं शब्दः प्रमाणकोटिमधिरोहति।[2] आप्तोक्तत्वमेव शब्दस्यप्रामाण्ये नियामकम्" यस्त्वप्रमत्तगीतः सः प्रमाणम् इत्यनेन महाभाष्यकृतापि आप्तोक्तत्वमेव शब्दस्य प्रामाण्ये नियामकमुक्तम्। अत्र अप्रमत्त इत्यनेन आप्त एव विवक्षितः। तत्राप्तमनेकधा परिभाषन्ते विद्वांसः, आप्तस्तु यथार्थवक्ता इति, अर्थसाक्षात्कारवानाप्तः, भ्रम-प्रमादविप्रलिप्सा शून्यः आप्तः, पतञ्जलिस्तु आप्तोनाम- अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः सः, इत्याह।[3] एतासां सर्वासाम् आप्तपरिभाषाणाम् शब्दतो भेदेऽपि निष्कृष्टार्थ एक एव।

"यस्त्वप्रमत्तगीतः" इत्यनेन महाभाष्येऽपि "अप्रमत्त" इत्यनेनाप्तलक्षणम् निर्दिष्टम्। अप्रमत्त इत्यस्य हि प्रमादशून्यः इत्यर्थः, प्रमादश्चात्र

1- लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते। म०भा०न०वा० 1/1/1.
2- आप्तोपदेशः शब्दः- न्यायसूत्र 1/1/7
3- वै०सि०ल०म०- शक्तिनिरूपणम्।

भ्रमविप्रलिप्सयोरप्युपलक्षणम्, इत्थञ्च भ्रमप्रमादविप्रलिप्साशून्यः आप्तः इत्युपर्युक्तमाप्तलक्षणम् अनेन भवति दर्शितम्। तत्र भ्रमः वाक्यार्थविषयको भ्रमः । प्रमादः अन्यार्थकशब्दभ्रमः । विप्रलिप्सा- प्रतारणाप्रतीतिविरुद्धार्थप्रतिमिपादयिषा।

वेदापौरुषेयत्ववादिनो जैमिनीयादयस्तु अनाप्तोक्तत्वाभावं शब्दस्य प्रामाण्ये नियामकमिच्छन्ति। यतः तन्मते वेदस्य केनाप्यनुक्तत्वात् आप्तोक्तत्वं न संघटते, अनाप्तोक्तत्वाभावस्तु सर्वथानुक्तत्वादेव- संघटते इति वेदस्य प्रामाण्यं भवति संगृहीतम् । एवञ्च एतदनुसारेण अनाप्तानुक्तः शब्दः प्रमाणम् इत्येवं शब्दप्रमाणम् परिभाषितव्यम्। अनया च परिभाषया सर्वथा अनुक्तः अपौरुषेयः इति यावद्वेदः, आप्तोक्तः लौकिकशब्दश्चेति द्वयमपि संगृह्यते। अनाप्तोक्तस्तु शब्दः प्रामाण्यात्परिवर्ज्यते।

शब्दादर्थबोधः -

भवतु- प्रमाणभूतः अप्रमाणभूतश्च सर्वोऽपि शब्दः सामग्रीसत्त्वे अर्थं बोधयत्येव,सःबोधः प्रमा-अप्रमा वाइत्यन्त् । नहि प्रामाण्यं शब्दस्य बोधकत्वे नियामकम् । तर्हि किं नियामकमिति चेत्- अनुपदमेव एतत्स्फुटीकरिष्यते। प्रथमं तावच्छब्दस्य अर्थविषयकाः विभिन्नाः पक्षाः इहोपस्थाप्यन्ते,यमर्थं सः बोधयति।

अर्थः -

तत्र केचन व्यक्तिमेव शब्दस्यार्थं मन्यन्ते, अयमेव व्यक्तिशक्तिवादः।

1- वै०सि०ल०मं०-तात्पर्यनिरूपणम् -पृ० 534

अपरे पुनः व्यक्तिशक्तिवादे आनन्त्यव्यभिचारादीन् दोषान् पश्यन्तो जातावेव शब्दस्य शक्तिमभ्युपगच्छन्ति। पक्षोऽयं मीमांसकानाम् एतन्मते व्यक्तिबोधः आक्षेपात् लक्षणया वा उपपाद्यः। नैयायिकास्तु उक्तपक्षद्वयेऽपि दोषमाकलयन्तः जात्याकृतिविशिष्टव्यक्तौ शब्दस्य शक्तिमातिष्ठन्ते , तथा च गौतमसूत्रम्- "जात्याकृतिव्यक्तयः पदार्थः।"[1] एतदनुसारेण जातिः, आकृतिर्व्यक्तिश्चेति त्रितयं संकलितम् शब्दस्यार्थः। तत्र व्यक्तिर्नाम-सास्नालाङ्गूलककुदखुर-विषाणादियुक्तं द्रव्यम्। आकृतिः अवयवविन्यासः । जातिः- अनेकद्रव्यानुगतमभिन्नाभिधानप्रत्ययनिमित्तं, नित्यम्, गोत्वादिशब्दव्यपदेश्यम्, सामान्यम्।[2] एतन्मतानुसारेण सर्वास्वपि गवादिव्यक्तिषु गवादिशब्दानामेका एव शक्तिः, तदनुगमिका च गोत्वादिजातिः। एवञ्च विशुद्धव्यक्तिशक्तिवादे व्यक्तीनामानन्त्यात् शक्तेरपि आनन्त्यम्, अगृहीतशक्तिकाया अपि व्यक्तेः बोधाद् व्यभिचारश्चेति यद्दोषद्वयम्, अथ च विशुद्धजातिशक्तिवादे वृत्तिं विना व्यक्तेर्बोधानुपपत्तिः, बाधप्रतिसंधानाभावात् व्यक्तौ लक्षणाया अपि अनुपपत्तिश्चेति यो दोषः तदेतत्सर्वं परिहृतम् ।

शाब्दिककैस्तु व्यक्तिः पदार्थः, जातिः पदार्थश्चेति पक्षद्वयमपि यथायोगमाश्रियते। स्फुटमेतत् पस्पशाह्निके महाभाष्ये- तत्र हि आकृतिः पदार्थः आहोस्वित् द्रव्यमिति विकल्पे उभयोः पृथक्-पृथक् पदार्थत्वं सिद्धान्तितम्। तत्र च व्यक्तिः पदार्थः इतिपक्षे "सरूपाणामेकशेष एकविभक्तौ"

---

1- न्यायदर्शन 2/2/67

2- व्या०म०भा० पस्पशाह्निकम्,

इति सूत्रम्,जातिः पदार्थः इतिपक्षे च " जात्याख्यामेकस्मिन बहुवचनमन्यतरस्याम् "[2] इतिसूत्रम् भाष्यकृता प्रमाणत्वेनोपन्यस्तम्, तथा च भाष्यम् - "उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा- "जात्याख्यायामेकस्मिन बहुवचनमन्यतरस्याम्" इत्युच्यते। द्रव्यं पदार्थं मत्वा " सरूपाणामेकशेष एकविभक्तौ" इत्येकशेष आरभ्यते"[3]।

अर्थस्य बौद्धता -

जातिव्यक्त्यादिरूपः योऽयमर्थः उक्तः सः बाह्यबौद्धभेदेन द्विविधो वेदितव्यः । सर्वेऽपि पदार्थाः यथा बाह्या एवं बौद्धा अपि । अन्तःकरणात्मिका बुद्धिः वासनादिरूपतत्तत्सामग्रीवशेन घटपटादितत्तदर्थाकारतां प्रतिपाद्यते। अयमेव बुद्धेरर्थाकारेण परिणामः बौद्धार्थ इत्याख्यायते। बुद्धेरर्थाकारेण परिणामे बौद्धार्थसर्जने इति यावत् क्वचिद् बाह्येनार्थेन इन्द्रियसन्निकर्षादिकं बाह्यं कारणम् , क्वचिच्च सूक्ष्मतत्तदर्थवासनादि रूपमान्तरं कारणम् । स्वप्नादिषु यो बुद्धेस्तत्तदर्थाकारेण परिणामः, तत्रेदमेव कारणम्, स्वप्नाद्यनुरोधेनैव च बौद्धार्थाभ्युपगमः आवश्यकः । तदुक्तम् -

" विप्रपृष्ठ्यादिचित्तस्थं न बहिस्थं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते[4] ।।"

---

1- पा0सू0 1*2-64
2- पा0सू0 1/2/58
3- व्या0म0भा0 1/1/1
4- वै0सि0ल0म0,बौ0नि0,पृ0 21।

न केवलं बौद्धार्थविषयिणी मान्यता शाब्दिकानामेव। अन्येऽपि हि दार्शनिकाः इमामर्थविधामभ्युपगच्छन्ति। सौगतानामेको मार्गस्तु सर्वं जगत्प्रपञ्चं बौद्धमेव = ज्ञानाकाररूपमेव मन्यते, प्रत्याचष्टे च सर्वथा बाह्यार्थसत्ताम्। बाह्यार्थवादिनो नैयायिकादयोऽपि न सर्वथा बौद्धार्थम् अपह्नोतुमलम्, तदाह न्यायसूत्रकारो गौतमः-"बुद्धिसिद्धन्तु तदसत्" [1]। घटादिरूपं कार्यमुत्पत्तेः प्राक् नाशानन्तरञ्च बाह्यरूपेण असदपि बुद्धिविषयतया बौद्धाकारात्मना - सिद्धम्। अतः "घटः उत्पद्यते" इत्यादौ उत्पत्तेः पूर्वं बही रूपेण असतोऽपि घटादेरुत्पत्तिकर्तृत्वम् उपपद्यते इत्येतत्सूत्राशयः [2]। वेदान्तिनामपि सम्मता एव बौद्धार्थसत्ता। तदाह भामत्याम् वाचस्पतिमिश्रः- चेतनो हि नामरूपे बुद्धावालिख्य "घटः" इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति। निर्वर्त्यस्यापि घटस्य अन्तःसंकल्पात्मना सिद्धस्य कर्मकारकत्वं "घटं करोति "इत्यादौ [3]।

तदेवं बाह्यबौद्धभेदेन अर्थस्य द्वे रूपे शाब्दिकैरभ्युपगम्येते। तत्र यद्यपि बाह्यमेव रूपं भवति व्यवहार्यम्, तथापि शब्दः बौद्धार्थमेवाभिधत्ते इति शाब्दिकानां राद्धान्तः। तदाह नागेशः- "एवं शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः [4]।" शब्दैरुच्चरितैः प्रथमतः

-------------

1- न्याoदo4/1/50

2- तत्कार्यमुत्पत्तेः प्राक् नाशोत्तर चासदपि बुद्धिविषयतया सिद्धमिति- वैoसिoलoमo-बौoनिo,पृo 204

3- जन्माद्यस्य यतः- वेoसूo1/1/2,वैoसिoमo-पृo 21।

4- वैoसिoलoमo,बौo निo

श्रोता बौद्धानेव अर्थाकारान् प्रतिपद्यते,परन्तु तेषामव्यवहार्यत्वेन तदभेदेन बाह्येष्वर्थेषु प्रवर्तते। यथैव हि बौद्ध एव अर्थाकारः शब्दवाच्यः,एवं वाचकोऽपि बौद्ध एव शब्दाकारः,स एव च आन्तरःस्फोट उच्यते, न तु श्रूयमाणः बाह्यः शब्दाकारः । यथा शब्दैः बुद्ध्यमानः बौद्धोऽर्थाकारः बाह्येष्वर्थेषु प्रवृत्तौ द्वारीभूय व्यवहारे उपयुज्यते, एवं श्रूयमाणः शब्दाकारः बौद्धस्य शब्दाकारस्य समर्पणद्वारेण बोधे उपयुज्यते। एतदप्याह नागेशः-" एवञ्च पदादिरूप आन्तरः स्फोटो वाचक इतिसिद्धम् । " तदेवं वाचकत्ववाच्यत्वे बौद्धशब्दबौद्धार्थयोरेवावतिष्ठेते। वैशेषिकादिसम्मतः बाह्यार्थाभिधानन्वादस्तु शाब्दिकैः न समाद्रियते, यतः शब्देन बाह्यार्थस्याभिधाने" घटोस्ति" "घटो नास्ति" इत्यादिषु विधिपरेषु निषेधपरेषु च उभयविधेष्वपि वाक्येषु अर्थासङ्गतिरापतति, यतः घट इत्यनेनैव बाह्यसत्ताविशिष्टस्य घटस्य प्रतिपादनात् पुनः सत्ताप्रत्यायनार्थम् अस्तीति प्रयोगस्य वैयर्थ्यम्। सत्तया विरोधाच्च सत्तानिषेधकं नास्तीति वचनमपि न युज्यते। बौद्धार्थाभिधानवादे तु घटशब्देन प्रतीयमानस्य बौद्धस्य घटस्य बाह्यसत्ता तदभावबोधनार्थम् "अस्ति नास्ति " इत्येतत्प्रयोगो युज्यते। तथाहि "घटः अस्ति " इति वाक्येन घटशब्देन योऽर्थः बुद्धौ आयाति ( यदर्थाकारा बुद्धिर्भवति) सोऽर्थः बहिरस्तीति प्रतिपाद्यते। एवं "घटो नास्ति" इतिवाक्येन बुद्धिसतस्तस्यार्थस्य बहिरभाव आवेद्यते। अपि च बाह्यार्थाभिधानवादे "शशशृङ्गं नास्ति " "अङ्कुरो

-------------

1- वै०सि०ल०म०-पृ० ६०।

जायते "इत्यादिप्रयोगाणामपि अनुपपत्तिः[1]। नहि " शशशृङ्गशब्दस्य कश्चिद् बाह्यार्थः प्रसिद्धोऽस्ति यस्याभाव उक्तवाक्येन प्रतिपाद्येत। प्रतियोगिप्रसिद्धिं विना च अभावप्रतिपादनं न युज्यते। एवम् जनेः पूर्वं बाह्याङ्कुरस्य सर्वथाभावात् " अङ्कुरो जायते" इतिवाक्येन तस्मिन् जनिक्रियाकर्तृत्वप्रतिपादनं न युज्यते, नहि असत् किमपि कस्याञ्चित् क्रियायां कर्तृभावं भजति। बौद्धार्थाभिधानवादे पुनः शशशृङ्गमित्यनेन शब्देन योऽर्थाकारः बुद्धिमारोहति तस्य बहिरभावः प्रतिपाद्यते। एवञ्चकृत्वा सर्वथा अप्रसिद्धबाह्यार्थानां शशशृङ्गादिपदानाम् अर्थवत्तापि उपपद्यते। बहिः शशशृङ्गादीनामभावेऽपि शशशृङ्गाद्याकारेण बुद्धेः परिणामः संभवत्येवेति बौद्धान्येव शशशृङ्गादीनि शशशृङ्गादिपदानामर्थाः। " अङ्कुरो जायते" इत्यादि वाक्यैरपि उत्पत्तेः पूर्वमपि बुद्धिसतः {बौद्धस्य} अङ्कुरादेः बाह्यरूपेण उत्पत्तिकर्तृत्वं प्रतिपाद्यते। तदाह- असत एव उत्पत्तिकर्तृत्वं कथमित्याशंकायां न्यायसूत्रकारः-

" बुद्धिसिद्धन्तु तदसत् "[2]

शाब्दिकैः शब्दार्थयोः यत्तादात्म्यमभ्युपगम्यते तदपि वस्तुतो बौद्धार्थमादाय एव, यतः बौद्ध एव अर्थाकारः शब्दस्य शक्यः। इत्थञ्च शब्दार्थयोः तदात्म्यमङ्गीकारे अग्न्यादिशब्दोच्चारणे मुखदाहाद्यापत्तिरूपो यो दोषः प्ररेरूद्भाव्यते, सोऽपि भवति निरस्तः। यतः बौद्धैरेव अग्न्याद्यर्थैः अग्न्यादिशब्दानां तादात्म्यं न तु बाह्यैः भौतिकैः ज्वलनादिरूपैः पदार्थैः।

---------------

1- तदेव - बौ०नि०-

2- न्यायदर्शन- 4/1/50

बौद्धे घाग्न्यादौ न दाहकत्वादिकम्, न हि बुद्धिगतः अग्न्याकारः दहति।

बौद्धार्थस्यैव शब्दवाच्यत्वेन शब्दजबोधविषयत्वेन च शब्दजे बोधे क्वापि अर्थबाधो न प्रसजति इत्यपि दर्शनं शाब्दिकानाम् । तदाह मञ्जूषायां नागेशः-

"बौद्धस्यैव सर्वत्र बोधविषयत्वेन बाधस्यैव अभावाच्च।"[1]

अत एव शाब्दिकनये शाब्दबोधे योग्यताज्ञानस्य कारणत्वम् अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं वा न स्वीक्रियते। बौद्धार्थाभिधानवादे हि अर्थबाधरूपाया अयोग्यताया क्वापि प्रसङ्ग एव न। तथा च " अग्निना सिञ्चति ", —

" एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।

मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः।।[2]

इत्यादि वाक्येभ्योऽपि बोधः शाब्दिकानां सम्मतः । यतः बाह्येन अग्निना बाह्यस्य सेचनस्य असंभवेऽपि ( बाधेऽपि ) बौद्धेनाग्निना बौद्धं सेचनं संभवत्येव, तदेव च "अग्निना सिञ्चति " इत्यादिनां वाक्यानामभिधेयम् ।

अथ यदि बौद्ध एवार्थः शब्देनाभिधीयते स च क्वचिदपि न बाध्यते तदा सर्वेषामेव शब्दानां वाक्यानां वा अबाधितार्थप्रतिपादकत्वं समानमिति शब्दानां प्रामाण्याप्रमाण्यव्यवस्था किमाधारा अवतिष्ठेत इति चेत्, ? अत्र एष समाधिः:-- शब्दानां न केवलमर्थबोधनेन एव कृतकृत्यता अपितु प्रवृत्ति

-------------

1- वै०सि०ल०म०-यो०नि०, पृ० 513

2- प्रकाशवर्णकवैरिद- वै०सि०ल०म०, उद्धृतम्, पृ० 510

पर्यन्तं व्यवहारपर्यन्तं वा ते व्याप्रियन्ते।[1] व्यवहार्यता च बाह्यार्थानामेव। श्रोता शब्दैः प्रथमतः बौद्धार्थान् प्रतिपद्य तदभेदेन बाह्येष्वर्थेषु व्यवहरति, अपरञ्च व्यवहारः तदर्थः शब्दप्रयोगः बौद्धार्थबाह्यार्थयोः संवादे एव संभवति। ततश्च येन शब्देन प्रतिपाद्यो बौद्धार्थः बाह्यर्थेन संवदति सः शब्दः प्रमाणम् । बौद्धार्थबाह्यार्थविसंवादे तु अप्रमाणम् । बाह्यार्थसंवादिबौद्धार्थप्रतिपादकत्वमेव च शब्दानां प्रामाण्यम् । एतदेव च तेषामबाधितार्थाविषयकत्वम् । बाह्यर्थविसंवादिबौद्धार्थप्रतिपादकत्वञ्च अप्रामाण्यम्, इदमेव च बाधितार्थविषयकत्वम्। एवंरीत्या बौद्धार्थाभिधानवादे बौद्धार्थस्य सर्वत्र अबाधे समानेऽपि शब्दानां प्रामाण्याप्रामाण्ये व्यवस्थापयितुं शक्येते।

अन्विताभिधानम् -

पदार्थविषये अन्यविधमपि एकं वैमत्यं वर्तते वादिनाम्- केचनअन्विते पदार्थे पदस्यशक्तिमभ्युपगच्छन्ति। तदनुसारेण इतरान्वयविशिष्टो घटादिः घटादिपदानामर्थः, इत्यन्वयांशोऽपि पदार्थकुक्षिमाविशति। अत्रापि द्वयी गतिः कार्यान्वितेशक्तिः, अन्वितमात्रे शक्तिरिति। अयमेव अन्विताभिधानवाद उच्यते।[2] एतद् वादिनामयं तर्कः यत व्यवहार एव शक्तिग्राहकेषु मुख्यः । व्यवहारेण च अन्वयविशिष्टे एव पदार्थे शक्तिः स्वीकर्तुमुचिता। अत्रैदमवधेयं

---

1- शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्यवृद्धाः।।
न्याय सि0मु0टीकायाम्-पृ0 359

2- न्यायमञ्जरी- 364

यत् पदशक्त्या योऽन्वयबोधः सः सामान्येनैव। सामान्येनैव यत्किञ्चिदन्वय-विशिष्टः पदार्थः पदेन बोध्यते न तु तत्तत्कार्यविशेषनिरूपिततत्तदन्वयविशेषरूपेण, तत्तत्पदार्थविशेषनिरूपिततत्तदन्वयविशेषरूपेण वा। विशेषतोऽन्वयबोधस्तु आकांक्षादिभिरेव न तु पदशक्त्या।

अभिहितान्वयः-

अपरे तु व्यवहारेण प्रथमतः अन्वयविशिष्टे अर्थे शक्तिग्रहेऽपि लाघवानुरोधेन पश्चादन्वयांशत्यागेन अन्वयरहिते पदार्थमात्रे शक्तिरवतिष्ठते इत्यन्वयांशरहित एव घटादिः घटादिपदानामर्थः इत्याहुः । अयमेवाभिहितान्वयवादः। एतद्वादिनामियम दृष्टिः यत पूर्वस्मिन् वादेऽपि विशेषरूपेणान्वयबोधार्थम् आकांक्षादीनामाश्रयणम् अनिवार्यम्, न च विशेषपरित्यागेन केवलेन सामान्यरूपेण क्वचिदप्यन्वयबोधः भवति इष्यते वा। अतः प्रथमं पदशक्त्या सामान्येनान्वयबोधः, पश्चादाकांक्षादिभिरिति स्वीकारः न युक्तिसहः, गौरवग्रस्तश्च। एवञ्च विशेषरूपेणान्वयबोधार्थम् अवश्याश्रयणीयैराकांक्षादिभिरेव निर्वाहे अन्वयांशे पदशक्तेरभ्युपगमः नावश्यकः[1]।

अर्थस्य द्वैविध्यम् -

अयञ्चार्थो द्विविधो वक्तुं शक्यते- पदार्थो वाक्यार्थश्चेति। तत्र पदान्तरसम्बन्धनिरपेक्षपदशक्तिमात्रविषयोऽर्थः पदार्थ, यथा " घटमानय "

---

1- न्यायमंजरी- 364

इत्यादौ घटत्वविशिष्टव्यक्तिरूपः घटपदार्थः, कर्मत्वरूपः अम् पदार्थ, आनयन-क्रियारूपः आ + नी इत्येतद् धातुपदार्थः, कर्तृरूपः आख्यातपदार्थः। परस्पर-साकांक्षपदसमूहरूपेण वाक्येन प्रतीयमानोऽर्थस्तु वाक्यार्थः। यथा अत्रैव घटकर्मकम्-त्वत्कर्तृकमानयनमित्यादिरूपः तत्तत्पदार्थान्वयगर्भोऽर्थः।

इदमत्रावधेयम्- अत्र विशकलितानामघटकर्मत्वादिरूपाणांपदार्थानाम् तत्तत्पदशक्त्या एव लभ्यत्वेन तेषां पदार्थानां संसर्गभूतः अन्वय एव वाक्यार्थतया पर्यवस्यति। तदुक्तम्- "संसर्गो हि वाक्यार्थः"[1]।

पदार्थसंसर्गात्मा वाक्यार्थः आकांक्षाग्राह्यः, न तु वृत्तिग्राह्यः इति नैयायिकाः। तदुक्तम् गदाधरभट्टाचार्यैः- "शाब्दबोधे चैकपदार्थे अपर-पदार्थस्य संसर्गः संसर्गमर्यादया भासते[2]। एतन्मतानुसारेण तत्तत्पदशक्तिभिः तत्तत्पदार्थेषु उपस्थितेषु योग्यतादिसहकृतया आकांक्षया तेषां पदार्थानां संसर्गो भासते, स एव च वाक्यार्थः, शब्दवृत्तिस्तु तत्र न व्याप्रियते।

मीमांसकास्तु वाक्यार्थे वाक्यस्य लक्षणामभ्युपगच्छन्ति- " सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्-"[3] इति हि तेषां सिद्धान्तः । शाब्दिकास्तु पुनः पदार्थेषु पदानामिव वाक्यार्थे वाक्यस्य शक्तिमातिष्ठन्ते। एवञ्च एतन्मतानुसारेण पदार्थ इव वाक्यार्थोऽपि वृत्तिवेद्य एव। यद्यपि मीमांसकमतेऽपि

---

1- वै०सि०ल०म०-शा०नि०
2- व्युत्पत्तिवादः
3- वै०भू०सा०-का० 67

वाक्यार्थः वृत्तिवेद्यः, तथापि शक्तिलक्षणाकृतो विशेषः अनयोः मतयोः।
वाक्यशक्तिवादिनां शाब्दिकानां मते आकांक्षायाः नोपयोगः इति तु न भ्रमितव्यम्, वाक्यशक्तिग्रहे आकांक्षायाः उपयोगस्य तैः स्वीकारात्। तदाह मंजूषायां नागेशः- वाक्यार्थसमयग्राहिकाचाकांक्षा। एवञ्च वाक्यशक्तिस्वीकर्तृणां तदस्वीकर्तृणाञ्च मते वाक्यार्थबोधे आकांक्षाश्रयणमनिवार्यम्। इयांस्तु विशेषः यत् वाक्यशक्त्यस्वीकर्तृणाम् आकांक्षा साक्षादेव वाक्यार्थबोधे उपयुज्यते, वाक्यशक्तिस्वीकर्तृणान्तु वाक्यशक्तिग्रहद्वारेण ।

शाब्दबोधाकारः-

अस्यैव वाक्यार्थस्य बोधः शाब्दबोधः इत्याख्यातेे। अस्य शाब्दबोधस्याकारविषये निष्पत्तिप्रक्रियाविषये कारणसामग्रीविषये च वर्तते दार्शनिकानां मतभेदः। तत्राकारविषयको मतभेदः प्रथमं स्फुटीक्रियते। नैयायिकाः शाब्दबोधं वाक्यजन्यं- वाक्यार्थबोधमिति यावत्- प्रथमान्तपदार्थमुख्यविशेष्यकम् , स्वीकुर्वन्ति। तद्यथा- "देवदत्तः पचति "इत्यत्र विक्लित्यनुकूलव्यापारानुकूलकृतिमान् देवदत्तः इति बोधः। अत्र नैयायिकमतानुसारेण विक्लित्यनुकूलव्यापाररूपस्य धात्वर्थस्य आख्यातार्थे कृतौ अन्वयः, आख्यातार्थकृतेः प्रथमान्तपदार्थे देवदत्तेऽन्वयः । शाब्दिकास्तु शाब्दबोधं व्यापारमुख्यविशेष्यकं स्वीकुर्वन्ति। अयमेव पक्षः मीमांसकानामपि। एतेषाम्मतानुसारेण " देवदत्तः पचति" इत्यत्र देवदत्तकर्तृको विक्लित्यनुकूलो व्यापार इति बोधः। अत्र प्रथमान्तार्थस्य देवदत्तादेः आख्यातार्थकर्तरि

---

1- वै०सि०ल०म०- आकांक्षानिरूपणम् ।

तस्य च धात्वर्थव्यापारे अन्वयः, व्यापारश्च प्रधानम् । तदाह- वैयाकरणभूषणे "फलप्रधानं व्यापारः तिङर्थस्तु विशेषणम्"[1]

यद्यपि शाब्दबोधस्याकारविषये शाब्दिकानां मीमांसकानाञ्च प्रायेण मतैक्यम् । उभयअपिहिशाब्दबोधं व्यापारमुख्यविशेष्यकममन्यन्ते, तथापि पदार्थ-विश्लेषणविषये अस्ति एतेषां विमतिः । शाब्दिकमतानुसारेण व्यापारो धात्वर्थः । मीमांसकास्तु व्यापारम् आख्यातार्थमिच्छन्ति । तदेवं शाब्दबोधस्याकारविषयको मतभेदः संक्षिप्य निदर्शितः । इदानीं निष्पत्तिप्रक्रियाविषये दृष्टिं पातयामः ।

शाब्दबोधस्य निष्पत्तिप्रक्रिया-

नैयायिकैः शाब्दबोधस्य निष्पत्तिप्रक्रिया इत्थं वर्ण्यते-

"पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ।।"[2]

एतदनुसारेण पूर्वं पदज्ञानं, ततः पदार्थस्मरणम्, ततो वाक्यार्थबोधरूपः शाब्दबोधः । पदज्ञानम् शाब्दबोधे करणम्, पदार्थोपस्थितिस्तु तत्र व्यापारः, व्यापारवत्कारणं हि करणमुच्यते । अत्र पदज्ञानस्तु करणमिति "तु" शब्देन पदज्ञानम्करणं न तु ज्ञाय-मानंपदम् इति सूचितम्, एवम् कुत इति चेदत्र तेषामयम्तर्कः ज्ञायमानपदस्य करणत्वे मौनिश्लोकादितः रहसि पुस्तकमीक्षमाणस्य वाशाब्दबोधो न स्यात, तत्रोच्चारणस्या-भावेन ज्ञायमानपदस्याभावात । पदसत्त्वार्थं हि उच्चारणमनिवार्यम्, पदज्ञानं तु

---

1- वै०भू०सा०, धात्वर्थनिर्णयः का० 2
2- कारिकावली- 8 ।

उच्चारणाभावेऽपि स्मरणात्मकं संभवत्येव। लिप्यादिकमेव च ईदृशस्थले तत्तत्पदस्मारकम्। अन्ये तु उच्चरित एव शब्दः प्रत्यायकः, नानुच्चरितः इति उद्घोषयन्तः ईदृशेस्थलेऽपि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणम् स्वीकुर्वन्ति। एकच्चैतेषाम् मतानुसारेण यत्र क्वचिच्छाब्दबोधः तत्र सर्वत्र सूक्ष्मोच्चारणसत्त्वात् पदसत्तास्त्येवेति ज्ञायमानस्य पदस्यापि कारणत्वं वक्तुं शक्यते। अयमेव पक्षः शाब्दिकानाम् ।

स्यादेतत् पदज्ञानानन्तरं पदार्थोपस्थितिः कथं भवति या शाब्दबोधे व्यापारतया स्वीक्रियते इति चेदत्रोच्यते- तत्तत्पदार्थे गृहीतसम्बन्धस्य गृहीतवृत्तिकस्य वा तत्तत्पदस्य ज्ञानानन्तरम् " एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति इति रीत्या पदार्थस्मरणम् भवति। अत्रैव च उक्तरीतेः संचारार्थं वृत्तिज्ञानस्योपयोगः। अत एव उपर्युक्तकारिकायामुक्तम्= "शक्तिधीः सहकारिणीति। " एकच वृत्त्या पदजन्यपदार्थस्मरणम् शाब्दबोधे व्यापार इति स्थितम् ।

शाब्दिकास्तु पदज्ञानशाब्दबोधयोः मध्ये पदार्थस्मरणं नाभ्युपगच्छन्ति। तन्मते पदज्ञानानन्तरं पदार्थविषयकसंस्कारोद्बोधे सति शाब्दबोधः। एवञ्च पदज्ञानोद्बुद्धः पदार्थविषयकः संस्कार एव शाब्दबोधे कारण न तु तज्जन्यं पदार्थस्मरणम्। पदार्थविषयकसंस्कारोद्बोधनमेव च पदज्ञानस्य व्यापारः। पदार्थोपस्थितेः कारणतावादिनामपि मते पदज्ञानेन प्रथमं पदार्थविषयकसंस्कारोद्बोधनं, तदनन्तरमेव च पदार्थस्मरणम् स्वीकार्यम् ।

एकसम्बन्धिज्ञानमपरमसम्बन्धिनं स्मारयति" इत्यस्यापि एकसम्बन्धिज्ञानामपरसम्बन्धिविषयकसंस्कारोद्बोधनद्वारेण अपरसम्बन्धिनं स्मारयति इत्येवार्थः। एवं

स्थिते पदार्थविषयकसंस्कारोद्बोधनस्य अवश्यस्वीकार्यत्वेन तावतैव शाब्दबोधोपपत्तौ मध्ये पदार्थस्मरणकल्पना न कार्या। तदाह मंजूषायाम् नागेशः "तद्धर्मावच्छिन्नविषयकशाब्दबोधत्वावच्छिन्नं प्रति स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यम् स्वाश्रयपदविषयकत्वम एतदुभयसम्बन्धेन तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुरिति।"[1] एतेन च भङ्ग्यन्तरेण शाब्दबोधे पदज्ञानम्, वृत्तिविषयकः पदार्थविषयको वा उद्बुद्धसंस्कारश्चेति द्वयमेव कारणम न तु तृतीयं पदार्थस्मरणमपि इति दर्शितम् नागेशेन। अस्मिन्नपि पक्षे पदज्ञानेन यत्पदार्थसंस्कारोद्बोधनं तत्पदपदार्थयोः वृत्तिरूपसम्बन्धमहिम्ना एव।

एवञ्च पदज्ञानशाब्दबोधयोः मध्ये पदार्थस्मरणस्वीकर्तॄणां तदस्वीकर्तॄणाञ्चेति उभयेषामपि वृत्तिज्ञानस्य शाब्दबोधे सहकारिता स्वीकार्या एव ।

शब्दवृत्तयः -

अत्रेदमवधेयम् उक्तरीत्या शाब्दबोधे वृत्तिज्ञानस्यानिवार्यमुपयोगम् एकस्वरेण स्वीकुर्वाणानामपि विभिन्नानां दार्शनिकानाम शब्दवृत्तीनां स्वरूपसंख्यादिविषयेऽस्ति वैमत्यम। यद्यपि शाब्दबोधोपयोगिपदपदार्थसम्बन्धो वृत्तिरिति सामान्येन वृत्तिपरिभाषा सर्वै रेवअभ्युपगम्यते। सर्वेषामेव पदपदार्थयोः सम्बन्धात्मिकावृत्तिः। अत एव एकसम्बन्धिज्ञानविधया पदज्ञानं पदार्थविषयंक स्मरणम जनयति, संस्कारं वा उदबोधयति। परन्तु सम्बन्धोऽयं किंरूपः, कतिविधश्च, तस्य प्रत्येकं विधायाः किं स्वरूपम ? इत्येतद्विषयेऽस्ति महान विवादः।

---

1- वै०सि०ल०म० -

शक्तिस्वरूपम् –

शक्तिर्नाम सामर्थ्यम् । पदविशेषस्य पदार्थविशेषेण सह सम्बन्ध एव शक्तिरिति,संकेत इति वा व्यपदिश्यते। अनया शक्त्या एव पदं पदार्थं बोधयति, अतः अर्थज्ञानोत्पादनसामर्थ्यमेव शक्तिरित्यपि वक्तुं शक्यते।

शक्तिविषयकं विविधमतम्–

अत्र नैयायिकैः शक्तिर्लक्षणा चेति द्वे शब्दवृत्ती स्वीक्रियेते।[1] शाब्दिकादिभिः पुनः शक्तिर्लक्षणा व्यञ्जना चेति तिस्रो वृत्तयः अभ्युपगम्यन्ते। कैश्चित्तु लक्षणा शक्तावेवान्तर्भाव्यते। शक्तिरेवाभिधा इति मुख्यावृत्तिरित्यपि च व्यपदिश्यते। वृत्तीनां संख्याविषये इव तत्तद्वृत्तेः स्वरूपविषयेऽपि एते विवदन्ते । तत्र "अस्माच्छब्दादयमर्थो बोधव्यः " इदं पदममुमर्थं बोधयतु इत्याकारिका ईश्वरेच्छैव शक्तिः,[2] सा एव च पदपदार्थयोः सम्बन्धः, न तु शक्तिर्नाम कश्चिदतिरिक्तः पदार्थ उक्तायाः ईश्वरेच्छायाः विषयत्वसम्बन्धेन पदे पदार्थे च सत्त्वेन पदपदार्थसम्बन्धरूपता निर्वहति। यद्यपि इच्छाविषयत्वम् पदे पदार्थे च समानं, तथापि बोधजनकत्वेन तस्यामिच्छायां विषयो वाचकः,स च शब्दः । बोधविषयत्वेन विषयस्तु वाच्यः,स चार्थः इति रीत्या वाचकत्व- वाच्यत्वे पदपदार्थयोः व्यवतिष्ठेते[3] ।

आधुनिकसंकेतितेषु तु शब्देषु न शक्तिः, तत्रेश्वरेच्छाया आभावात्,अपितु संकेतकर्तुः पुरूषस्य संकेतग्रहमात्रादेव परेषां तत्तदर्थस्य बोधः इति प्राचीननैयायिकाः।

---

1- वै0सि0ल0म0– शक्तिनिरूपणम्, पृ0 16
2- वै0सि0ल0म0– शक्तिनिरूपणम् –
3- वै0सि0ल0म0–शक्तिनिरूपणम्– रत्नप्रभायाम् ।

नव्यनैयायिकास्तु इच्छामात्रं शक्तिमभ्युपगच्छन्ति। सा चेच्छा ईश्वरस्य वा आधुनिकस्यवा। एवञ्च एतेषां मतानुसारेण आधुनिकसंकेतितेष्वपि शक्तिः अस्त्येव[1]। शक्तिः संकेतश्चेति पृथक्-पृथक् द्वयं न स्वीकार्यमिति एतन्मते प्राचीनमतापेक्षया लाघवम्।

प्राचीनशाब्दिकमते तु बोधजनकतैव शक्तिः। मतमिदं वैयाकरणभूषणसारे कौण्डभट्टेन विशदीकृतमस्ति[2]। नव्यशाब्दिकशिरोमणिः नागेशस्तु वैयाकरण-सिद्धान्तमञ्जूषायाम् नैयायिकमतं प्राचीनशाब्दिकमतञ्च संदूष्य "पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्यायः" इति सिद्धान्तितवान्[3]। एतदनुसारेण यथा द्वयोः द्रव्ययोः संयोगनामा, द्रव्यगुणयोः समवायनामा अतिरिक्तः सम्बन्धः, एवम् पदपदार्थयोरपि एकः अतिरिक्तो विलक्षण एव सम्बन्धः, न तु ईश्वरेच्छादिरूपः स एव च शक्तिरित्याख्यायते, वाच्यवाचकभाव इत्यपि चास्यैवापरन्नाम। मीमांसकमतेऽपि पदपदार्थयोः विलक्षणसम्बन्धात्मिका एवं शक्तिः। तन्मते हि शक्तिरतिरिक्त एव पदार्थः[4]।

लक्षणानिरूपणम्-

इच्छारूपाशक्तिः, बोधजनकतारूपाशक्तिः, पदपदार्थयोरतिरिक्तसम्बन्धरूपा-

---

1- सिद्धान्तमुक्तावली- शब्दखण्डम् पृ0 359

2- तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैवशक्तिरित्यर्थः- वै0भू0सा0- शक्तिनिर्णये।

3- वै0सि0म0- शक्तिनिरूपणे।

4- शास्त्रदीपिका, पृ0 356

शक्तिरिति शक्तिस्वरूपविषये इव लक्षणास्वरूपविषयेऽपि शक्यसम्बन्धरूपा लक्षणा, उपस्थितिरूपा लक्षणा, आरोपरूपा लक्षणा- वेत्येवं वादिनामनेके पक्षाः सन्तिः । तत्र केचिच्छक्यार्थसम्बन्धो लक्षणा इत्यातिष्ठन्ते। "लक्षणा शक्यसम्बन्धः" एतदनुसारेण[1] गंगायां घोषः" इत्यादौ मुख्यार्थगंगायाः तीरादौ सामीप्यादिरूपः, संयोगादिरूपो वा सम्बन्ध एव लक्षणा। अत्रापि लक्ष्यार्थे तीरादौ लक्ष्यतावच्छेदके तीरत्वादौ चेत्युभयत्र लक्षणामभ्युपगच्छद्भिः उभाभ्यामेकसम्बन्धस्यासंभवेन संयोगसंयुक्त- वृत्तित्व[2] सम्बन्धद्वयरूपा एका लक्षणा स्वीक्रियते । तत्र संयोगः तीरादौ, संयुक्तवृत्तित्वं तीरत्वादौ। अपरे तु सम्बन्धद्वयरूपलक्षणास्वीकारे गौरवात तीरादौ एव लक्षणा,न तु लक्ष्यतावच्छेदके तीरत्वादौ। तीरत्वादेस्तु भानं लक्षणां विनैव भवति,इत्याहुः।[3] एतत्पक्षद्वयेऽपि लक्ष्यार्थस्य तीरादेः तीरत्वादिरूपेणैव शाब्दबोधे भानम् तत्र लक्षणा स्यान्मा वा भूदित्यन्यत । शाब्दिकमते तु शक्यतावच्छेदक- गंगात्वादिरूपेणैव लक्ष्यस्य तीरादेः भानमिति विशेषः।

अपरे तु शक्यार्थसम्बन्धज्ञानजन्या, लक्ष्यार्थोपस्थितिरेव लक्षणा इत्येवं लक्षणामुपस्थितिरूपामिच्छन्ति। उक्तमतद्वयेऽपि लक्षणा शक्तिच्छायानुवर्तिनी, यत्र शक्तिः तत्रैव लक्षणासंभवति। शक्तेरभावे शक्यसम्बन्धरूपा शक्यसम्बन्धज्ञानजन्योपस्थितिरूपा वा लक्षणा न संभवति। अतः एतन्मते वाक्ये न लक्षणा तत्र शक्तेरनंगीकारात्। पक्षोऽयम् नैयायिकानाम् ।

----------------

1- सिद्धान्तमुक्तावली- 82

2- वै०सि०म०- लक्षणानिरूपणम्

3- न्या०सि०मु०-पृ० 388

वाक्ये शक्तिम् स्वीकुर्वन्तोऽपि लक्षणामभ्युपगच्छन्तो मीमांसकास्तु ज्ञाप्यसम्बन्धो लक्षणा " इत्याहुः।[1] एवम् स्वीकारे वाक्यस्य शक्यार्थाभावेऽपि ज्ञाप्यार्थस्य सत्त्वेन ज्ञाप्यार्थसम्बन्धरूपा लक्षणा वाक्येसंघटते। एतन्मतानुसारेण "गंभीरायां नद्यां घोष "इत्यादौ" गभीरायां नद्याम् " इत्येतत्-पदसमूहरूपस्य वाक्यस्य गभीरनदीतीरे लक्षणा। न्यायनये तु एवम्विधे स्थले यथाकथञ्चित् पदलक्षणया एव निर्वाहः।

शाब्दिकसिद्धान्ते तु शक्यतावच्छेदकारोपरूपा लक्षणा। एतन्मते आरोपित शक्यतावच्छेदकरूपेणैव लक्ष्यार्थस्य भानम्। तद्यथा- "गंगायां घोषः" इत्यादौ गंगात्वरूपेण एव तीरादेर्भानम्,[2] अतएव गंगात्वसमनियतं शैत्यपावनत्वादिकम् तीरे प्रतीयते। अत एव च गंगायां मीनघोषौ इत्यादिकाः प्रयोगाः संगच्छन्ते। शाब्दिकमतानुसारेण लक्षणास्थलीयेयं बोधप्रक्रिया,-गंगायां घोषः "इत्युक्ते प्रथमतः शक्यार्थविषयकः अन्वयबोधो जायते, ततः शक्यार्थविषयकान्वयबोधे वक्तृतात्पर्याविषयत्वग्रहे अन्यत्रार्थे वक्तृतात्पर्यविषयत्वग्रहे च सति लक्ष्यार्थस्य तीरादेः बोधः। ईदृशे स्थले शक्यार्थविषयकान्वयबोध एव न भवतीति तु न शक्यते वक्तुम्। शक्यार्थविषकान्वयबोधं विना तत्र वक्तृतात्पर्याविषयत्वग्रहस्यासंभवात्। शाब्दिकनये अन्वयबोधे योग्यताज्ञानस्तु न कारणमित्यग्रे वक्ष्यते।

वस्तुतस्तु शाब्दिकसिद्धान्ते लक्षणा नातिरिक्तावृत्तिः, अपितु शक्तावेव

---

1- वै०सि०म०- लक्षणानिरूपणम्, पृ० 108
2- वैसि०मं०- लक्षणानिरूपणम्

सा अन्तर्भवति। शक्तिः, लक्षणा इति च व्यावहारिक एव भेदः न तु वास्तवः।[1]
शक्तेरेव प्रसिद्धाप्रसिद्धभेदेन द्वे विधे। तत्र प्रसिद्धा शक्तिः शक्तिरिति, अप्रसिद्धा शक्तिः लक्षणा इति व्यवदिश्यते। तदाह मञ्जूषायां नागेशः- "आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे च लक्षणेति व्यवहारः।[2] बोधजनकताशक्तिरिति वदतां प्राचीनवैयाकरणानामपि शक्त्यैव लक्षणायाः क्रोडीकारः। स्पष्टञ्चैतद् वैयाकरणभूषणे।[3] एवञ्च शाब्दिकनये अर्थे मुख्यगौणव्यवहारोऽपि प्रसिद्ध्यप्रसिद्धिमूलक एव न तु वृत्तिभेदनिबन्धनः।
तदाह शाब्दिकाचार्यो हरिः -

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः ।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते।।
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वञ्चोपचर्यते ।।[4]

स्यादेतद्, अतिरिक्तवृत्तिरूपा अप्रसिद्धशक्तिरूपा वा लक्षणा तत्रैव प्रसरति यत्र तात्पर्यानुपपत्तिः इत्येतद्विषये समेषाम् ऐकमत्यम्। वक्तृतात्पर्यानुपपत्तिप्रतिसंधानमेव लक्षणायां मुख्यं बीजम्[5]। केचित्तु अन्वयानुपपत्तिमपि लक्षणायाः बीजमिच्छ-

---

1- वै०सि०मं०- लक्षणानिरूपणम्
2- तदेव, पृ० ।।2
3- वै०भू०सा० शक्तिनिर्णये
4- वाक्यपदीय 2/252,55
5- वस्तुतः तात्पर्यानुपपत्तिरेव तद्बीजम् ।
वै०सि०म०- लक्षणानिरूपणम् ।

न्ति,परन्तु तदन्ये न सहन्ते, यतः अन्वयानुपपत्तेः लक्षणाबीजत्वे" काकेभ्यो दधि रक्ष्यताम्" इत्यादौ लक्षणा न स्यात[1] । नह्यत्र काकादिकदधिरक्षारूपस्यान्वयस्य अनुपपत्तिः । तात्पर्यानुपपत्तिस्तु अस्त्येव, सर्वतो दधिरक्षायाः वक्तृतात्पर्य-विषयत्वात्। किं बहुना यत्रान्वयानुपपत्तिरस्ति तत्रापि नान्वयानुपपत्त्या लक्षणा अपितु तात्पर्यानुपपत्त्या एव, यथा- गंगायां घोषः "इत्यादौ। यद्यत्रान्वयानु-पपत्तिरेव लक्षणाबीजं स्यात तदा कदाचिद् गंगापदस्य तीरे, कदाचिच्च घोषपदस्य मीनादौ लक्षणा इति व्यवस्था नोपपद्येत, उभयथापि अन्वयानुपत्तेः परिहारसंभवात् । तात्पर्यानुपपत्तेर्लक्षणा बीजत्वे तु वक्तृतात्पर्यनिर्धारणोपपद्यते उक्ताव्यवस्था। एवञ्च अवश्याश्रयणीयया तात्पर्यानुपपत्त्या एव सर्वत्रलक्षणोपपत्तौ क्वचित् सती अपि अन्वयानुपपत्तिः अन्यथासिद्धा।

आलंकारिकैस्तु लक्षणायाः स्वरूपम न स्फुटमुक्तम्, लक्षणा किं स्पेति ? परन्तु लक्षणायां बीजत्रयं प्रतिपादितम्- मुख्यार्थबाधः, मुख्यार्थसम्बन्धः, रूढिप्रयो-जनान्यतरत्त्वञ्च।तदुक्तं मम्मटाचार्येण-

मुख्यार्थबाधे तद्योगे रूढितोऽथप्रयोजनात् ।

अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।[2]

अत्र मुख्यार्थबाध इत्यनेन अन्वयानुपपत्तितात्पर्यानुपपत्ती संगृहीते- यतः मुख्यार्थबाधः अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा भवति। वस्तुतस्तु सर्वत्र

---------------

1- न्या०सि०मु०-पृ० 386

2- काव्यप्रकाशः 2/12

तात्पर्यानुपपत्त्या एव मुख्यार्थबाधः । एतच्चानुपदमेवोपपादितम् । मुख्यार्थबाधश्च मुख्यार्थे वक्तृतात्पर्यविषयत्वाभाव एव। तद्योगे इत्यनेन मुख्यार्थसम्बद्धे एव अर्थान्तरे लक्षणा इति दर्शितम् । तेन " गंगायाम् घोष " इत्यादौ गंगापदस्य गंगातीरे एव लक्षणा न तु तीरमात्रे। मुख्यार्थसम्बन्धश्च सामीप्यसाहचर्यादिरूपोऽनेकविधः। सम्बन्धोऽयं सामान्येन चतुर्धा वर्णितो महाभाष्यकृता। तद्यथा-चतुर्भिश्चप्रकारैः अतस्मिन् स इति भवति-तात्स्थ्यात्,ताद्धर्म्यात्, तत्सामीप्यात् तत्साहचर्यात्।[1] उक्तमम्मटकारिकायाम रूढितोऽथप्रयोजनात् इत्यनेन रूढिम् प्रयोजनं वा विना लाक्षणिकप्रयोगः असाधुरिति दर्शितम्। अत एव रूढिप्रयोजनरहिता लक्षणा निषिद्धलक्षणा उच्यते। काव्यप्रकाशे "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते "इत्येनेन वाच्यार्थेन अविनाभूतस्यसम्बन्धस्य या प्रतीतिः सा लक्षणा इत्यपि मतमुल्लिखितमस्ति।

## व्यञ्जनानिरूपणम्

तृतीयाशब्दवृत्तिः व्यञ्जना नाम,यस्मिन्नर्थे शक्तिः लक्षणा च नप्रसरतः बुद्ध्यते च योऽर्थ : शब्देन,एवम्विधस्यार्थस्य प्रतीत्यर्थ वृत्तिरियमाश्रियते।[2] शाब्दिकाः आलंकारिकाश्च विशेषतोऽस्याः वृत्तेरूपासकाः। शाब्दिकास्तावत्प्रधानप्रतिपाद्यं स्फोटम् अनयैववृत्या संबध्नन्ति । ध्वनिव्यंग्यो हि तन्मते स्फोटः,व्यंग्यत्वञ्च

---

1- व्या०म०भा० 4/1/8
2- सा०द० 2/11-13

व्यञ्जनागम्यत्वमेव[1]। आलंकारिकाणामपि काव्यात्मभूतस्य ध्वनेः रसस्य वा व्यञ्जनायामेव निर्भरः। व्यावहारिकवाक्येष्वपि यत्र तत्रानुभूयते व्यञ्जना । यथा- गतोऽस्तमर्कः इत्यादौ[2]।

अस्याश्च व्यञ्जनायाः स्वरूपम् वैयाकरणसिद्धान्तलघुमञ्जूषायां नागेशेन इत्थं प्रत्यपादि-" मुख्यार्थबाधग्रहनिरपेक्षबोधजनकः, सम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकः, वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना[3]।" अत्र मुख्यार्थबाधग्रहनिरपेक्ष" इत्यनेन, सम्बद्धासम्बद्धसाधारणं" इत्यनेन च लक्षणापेक्षया व्यञ्जनायाः वैलक्षण्यम् दर्शितम् ।

लक्षणा हि मुख्यार्थबाधग्रहसापेक्षा सम्बद्धार्थमात्रविषयिणी च भवति। एवम् "प्रसिद्धाप्रसिद्ध"इत्यनेन शक्तितो व्यञ्जनायाः व्यतिरेको दर्शितः । शक्तिर्हि प्रसिद्धार्थविषयिणी एव भवति।

केचित्तु वैयंजनिकं बोधमनुमित्यात्मकं मन्यमानाः अनुमानेनैव व्यञ्जनाम् गतार्थयन्ति, यथा तार्किकाः। तन्मते शक्तिः लक्षणा चेति द्वे एव शब्दवृत्ती ।

अर्थबोधे कारणान्तराणि
-----------------

पदज्ञानवृत्तिज्ञानाभ्यामन्यान्यपि कानिचित् शाब्दबोधे कारणानि

-------------

1- वा०प० 1/88
2- व्य जना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारः - का०प्र० 2/12
3- वै०सि०ल०म०- व्य जनानिरूपणम् ।

भवन्ति। तानि च मतभेदेन चत्वारि आकांक्षायोग्यतासत्तिः तात्पर्यञ्चेति "आसत्तियोग्यताकांक्षातात्पर्यज्ञानमिष्यते कारणम् ।"

आकांक्षानिरूपणम्-

तत्राकांक्षायाः शाब्दबोधकारणत्वं सर्वसम्मतम् । इतरेषान्तु तद्विवाद-ग्रस्तम् । जिज्ञासारूपा, अन्वयबोधाजनकत्वरूपा, समभिव्याहाररूपा चेतित्रिरूपा-कांक्षा नागेशेन मंजूषायां दर्शिता। तत्र जिज्ञासारूपा एव तदनुसारेण मुख्याकांक्षा, तथाहि- एकपदार्थे ज्ञाते तदन्वययोग्यस्य पदार्थान्तरस्य या जिज्ञासा अस्यान्वय्यर्थः कः इत्येवमूरूपा, सा एव आकांक्षा।[2] यद्यपि जिज्ञासेयं पुरुषनिष्ठा एव, तथापि विषयत्वसम्बन्धेनार्थनिष्ठापि भवति। अत एव अयमर्थो अर्थान्तर-माकांक्षते, अर्थः साकांक्षः इत्येवमर्थस्य साकांक्षत्वव्यवहारः उपपद्यते।[3] पदे तु नेयमाकांक्षा, अर्थबोधोत्तरम् एव हि जिज्ञासैयमुदेति, न तु पदमात्रज्ञानोत्तरम्। पदंसाकांक्षमितिव्यवहारस्तु साकांक्षार्थबोधकमिति तात्पर्येण। तदाह महाभाष्यकारः:- "परस्परव्यपेक्षां सामर्थ्यमेके।" का पुनः शब्दयोः व्यपेक्षा ? न ब्रूमः शब्दयोरिति, किं तर्हि ? अर्थयोः । इह राज्ञः पुरुषः इत्युक्ते राजा पुरुषमपेक्षते ममायमिति, पुरुषः राजानमपेक्षते "अहमस्य" इति[4]।

---

1- वै०प०-पृ० 210/न्या०वि०मु०-का० 82
2- वै०सि०ल०म०-आकांक्षानिरूपणम्
3- तदेव पृ० 495
4- व्या०म०भा० 2/1/1

उक्तविधजिज्ञासोत्थापकञ्च एकपदार्थस्यपरपदार्थव्यतिरेकप्रयुक्तम् अन्वयबोधाजनकत्वमेव। अत एतदन्वयबोधाजनकत्वमपि आकांक्षेति व्यपदिश्यते। केचित्तु इदम् अन्वयबोधाजनकत्वमेव मुख्यामाकांक्षामाहुः। तदुक्तम् विश्वनाथेन- "यत्पदेन विना यस्याननुभावकता भवेदाकांक्षा।[1] "पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा" इति चान्यत्र {तर्क संग्रह} इदमेवान्वयबोधाजनकत्वं, तद्रूपाकांक्षा वा अभिधानापर्यवसानमुच्यते। इदमत्रध्येयम्नागेशः एकस्मिन्पदार्थे पदार्थान्तरव्यतिरेकप्रयुक्तम् अन्वयबोधाजनकत्वमाकांक्षामाह। तदनुसारेण अन्वयबोधाजनकत्वरूपाप्याकांक्षा पदार्थनिष्ठा एव। विश्वनाथादिभिस्तु एकस्मिन्पदे पदान्तरव्यतिरेकप्रयुक्तान्वयबोधाजनकत्वमाकांक्षात्वेन प्रतिपादितम्। अतः तदनुसारेण आकांक्षायाः पदनिष्ठता वक्तुं शक्यते। वस्तुतस्तु पदार्थप्रतीत्यनन्तरमेवान्वयबोधस्य प्रसंगः। अतः अन्वयबोधजनकत्वं साक्षात् पदार्थे एव, पदे तु परम्परया। एवञ्चान्वयबोधाजनकत्वमपि साक्षात्पदार्थे एवेति नागेशमतमेव ज्यायः। अन्वयबोधश्चात्र तदाकांक्षितसकलक्रियाकारक- विषयको विवक्षितः। तेन खण्डवाक्यार्थबोधोत्तरमपि महावाक्यार्थबोध उपपद्यते।[2] यतः खण्डवाक्येन यत्किंचित्क्रियाकारकान्वयबोधस्य जननेऽपि तदाकांक्षितसकलक्रियाकारकान्वयबोधस्याजनकत्वन्तु अस्त्येव, स बोधस्तु महावाक्येनैव जन्यते।

इदमन्वयबोधाजनकत्वं समभिव्याहारकारणता मूलकम् यतः ईदृशसमभि-

---

1- न्या०सि०मु०- का० 84

2- वै०सि०ल०म०-आ० निरूपणम्।

व्यवहार: ईदृशान्वयबोधे कारणमिति ज्ञानं वर्तते। अतो भवति तत्तत्पदे पदार्थे वा अन्वयबोधाजनकत्वज्ञानम्[1]। एवञ्चान्वयबोधाजनकत्वज्ञानस्य तत्तत्समभिव्याहारकारणताज्ञानमूलकत्वात् समभिव्याहारोऽपि आकांक्षेति व्यपदिश्यते। समभिव्याहारश्च तत्तत्पदसमूहः। समभिव्याहारविशेषस्य तत्तदन्वयबोधे कारणत्वादेव घटमित्याकारकेण घटपदाम्पदसमभिव्याहारेण बोधो जन्यते, न तु घटः कर्मत्वमित्याकारकेण समभिव्याहारेण। तत्त्पदसमूहरूपस्य समभिव्याहारस्य आकांक्षात्वेन व्यवहारः गदाधरभट्टाचार्यैः बहुशः कृतो व्युत्पत्तिवादे[2]।

तदेवम् अन्वयार्थजिज्ञासा अन्वयबोधाजनकत्वं पदसमभिव्याहारश्चेति त्रितयमपि मतभेदेन कोटिभेदेन वा आकांक्षा। त्रितयमपि चैतच्छाब्दबोधे हेतुः। अत एव एकबारमन्वयबोधे जाते न पुनरन्वयबोधः। अत एव च "घटमानय" इति समभिव्याहाराद् अन्वयबोधेऽपि तत्समानपदार्थकात् कर्मत्वमानयनं कृतिः इति समभिव्याहाराज्ञान्वयबोधः[3]।

इयमाकांक्षैव च वाक्यस्य पदसमूहस्य वा वाक्यत्वमाधत्ते। साकांक्षाणामेव हि पदानां समूहो वाक्यम्। तदुक्तम् -

"अर्थैक्यादेकं वाक्यं साकांक्षं चेद् विभागे स्यात्"[4] एवञ्च वाक्यसंरचनायामाकांक्षाया अस्ति महत्वपूर्णं स्थानम्।

---

1- व्या०म०भा० 3/2/144
2- व्युत्पत्तिवादः
3- वै०सि०ल०म०-आ०निरूपणम्
4- पू०मी०अ०2,पा०1,अ०14, सूत्र 46

योग्यतानिरूपणम्-

आकांक्षावद् योग्यतापि शाब्दबोधे कारणम्, सा चान्वयरूपस्यार्थस्य अंबाधः, यस्मिन् पदार्थे यस्य पदार्थस्य येन संसर्गेण अन्वयो विवक्षितः, तस्मिन् पदार्थे तस्य पदार्थस्य तेन संसर्गेणान्वयस्य संभव एव वा योग्यता। तदुक्तम् "अर्थाबाधो योग्यता " [1] " पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता" इति च योग्यताज्ञानस्य शाब्दबोधे कारणत्वादेव "अग्निना सिञ्चति" इत्यादि वाक्यान्नान्वयबोधः, अपितु ईदृशे स्थले विशकलितपदार्थोपस्थितिमात्रम् [2] ।

अतएव "अग्निना सिञ्च " इत्युक्ते श्रोतुः न प्रवृत्तिः। नह्यत्र योग्यता अस्ति सेचनपदार्थे अग्निपदार्थस्य करणकत्वसंसर्गेणान्वयस्य बाधात् सेचने अग्निकरणकत्वस्य बाधादिति यावद्। यद्वा अर्थबाधरूपायाः अयोग्यतायाः निश्चयः शाब्दबोधे प्रतिबन्धकः। योग्यताज्ञानस्य कारणत्वम् वा स्वीक्रियताम्, अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं वा अभ्युपगम्यताम्, उभयथापि" अग्निना सिञ्चति " इत्यादयोग्यवाक्यस्थले उपपद्यते एव अन्वयबोधाभावः । इयांस्तु विशेषः योग्यताज्ञानस्य कारणत्वे स्वम्विधे स्थले योग्यताज्ञानरूपकारणाभावाद् बोधाभावो वक्तव्यः । अयोग्यतानिश्चयस्यप्रतिबन्धकत्ववादेतु अयोग्यतानिश्चयरूपप्रतिबन्धकसद्भावात् स वक्तव्यः । पक्षद्वयमप्येतद् न्यायादिनयानुसारेण द्रष्टव्यम् [3] ।

शाब्दिकैस्तु न उक्तरूपायाः योग्यतायाः ज्ञानस्य शाब्दबोधे कारणत्वम् नाप्ययोग्यतानिश्चयस्य प्रतिबन्धकत्वम् स्वीक्रियते। तदनुसारेण असत्यपि

---

1- न्या०सि०मु०-का० 83
2- वै०सि०ल०मं०-पृ० 507
3- न्या०सि०मुक्तावली- शब्दखण्डम्

योग्यताज्ञाने सत्यपि वा अयोग्यतानिश्चये पदज्ञानपदार्थोपस्थित्यादिकारणसामग्र्यां सत्याम् शाब्दबोधो भवत्येव। तदुक्तम्- "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि[1]।" एवञ्च एतन्मते अग्निना सिञ्चति "इत्यादितोऽपि अग्निकरणकसेचनरूपार्थबोधो भवत्येव, स बोधः भ्रमः प्रमा वा इत्यन्त् । अत एव ईदृशवाक्यप्रयोक्तुः कथमद्रवेणाग्निना सेकं ब्रवीषि इत्येवं श्रोतृभिः क्रियमाणः उपहासः संगच्छते। उक्तवाक्यस्य अबोधकत्वे तु उक्तवाक्यप्रयोगानन्तरम् एतदर्थकद्रविडादिभाषीयवाक्यप्रयोगानन्तरमिव श्रोतॄणां मूकतैव स्यात्।

यद्यप्ययोग्यतानिश्चयरूपेण बाधज्ञानेन शाब्दो बोधः न निवार्यते तथापि शाब्दजन्ये बोधे बाधज्ञानेन अप्रामाण्यमाधीयते एव। अत एव "अग्निना सिञ्चति" इत्यादिकः अग्निकरणकसेचन रूपार्थबोधेऽपि तस्मिन् बोधे बाधज्ञानेन अप्रामाण्यशंकाजननात् श्रोतुः न प्रवृत्तिः। अप्रामाण्यज्ञानास्पृष्ट एव हि बोधः प्रवृत्तौ उपयुज्यते। एवञ्च अर्थः संघटतां मा वा संघटतां शाब्द-बोधस्तु भवत्येव। योग्यताज्ञानमयोग्यतानिश्चयश्च जायमाने बोधे प्रामाण्याप्रमाण्ये एव आदधाते। अत एव च शाब्दप्रक्रियायां तयोः समादरः इति शाब्दिकमतनिष्कर्षः[2] ।

आसत्तिनिरूपणम् -

आसत्तिरपि केषाञ्चन मते शाब्दबोधे कारणम्। अत एव घटमिति उक्त्वा किंचित्कालानन्तरम् "आनय" इत्युक्ते नान्वयबोधः ।

---

1- वा०प०
2- वै०सि०ल०म०-योग्यतानिरूपणम्

आसत्तिश्च तत्तदर्थकपदानाम् संनिधानमेव- संनिधानन्तु पदस्यासत्ति-रुच्यते"[1]। नागेशस्तु आसत्तिमित्थं परिभाषे- "साकान्क्षप्रतियोगिपदार्थानां तद्बोधक- पदानां वाऽव्यवधानेन प्राथमिकोपस्थितिरूपा।"[2] एतदनुसारेण अन्वय-प्रतियोग्यनुयोगिपदार्थानाम् तद्वाचकपदानां वा अव्यवधानेनोपस्थितिः आसत्तिः। वस्तुतस्तु पदार्थनाम् अव्यवधानेन उपस्थितिरूपा एव आसत्तिः शाब्दबोधे अपेक्ष्यते न तु पदानाम्।[3] अत एव काव्यादौ अनासन्नपदस्थले पदानामासत्तेरभावेऽपि व्युत्पन्नस्य आकांक्षादिवशेन झटिति तत्तत्पदार्थोपस्थितिमतः शाब्दबोध उपपद्यते। पदानामासत्तिस्तु मन्दस्याविलम्बेन शाब्दबोधं प्रयोजयति इति मन्दस्य अविलम्बेन शाब्दबोधे एव सा उपयुज्यते न तु शाब्दबोधमात्रे। यद्यप्यनासन्नपदस्थलेऽपि योजनावाक्यकल्पनया मन्दस्य भवति बोधः ,तथापि तत्र योजनावाक्यकल्पनाप्रयुक्तो विलम्बो भवत्येव। आसन्नपदस्थले तु मध्ये योजनावाक्यं न कल्पनीयम्, अपितु श्रुतवाक्यानन्तरमेव तस्य बोधः। एवञ्च पदानामासत्तिः शाब्दबोधे अविलम्बस्यैव कारणं न तु शाब्दबोधस्य। सापि मन्दस्य कृते। व्युत्पन्नस्य तु अनासन्नपदस्थलेऽपि योजनावाक्यकल्पनां विनैव श्रुतवाक्यादेव बोधः।[4] पक्षोऽयं नागेशस्य ।

तात्पर्यनिरूपणम्-

योग्यताज्ञानस्य इव तात्पर्यज्ञानस्यापि शाब्दबोधकारणत्वविषये पक्षविपक्षौ लभ्येते । तत्र नैयायिकादयः सर्वत्र शाब्दबोधे तात्पर्यज्ञानस्य कारण-

1- न्या०सि०मु०-का० 82
2- वै०सि०ल०म०,पृ० 526
3- न्यायासि मु०,पृ० 410
4- वै०सि०ल०म०-आ०निरूपणम्

त्वमिच्छन्ति। अत एव पदार्थोपस्थित्याकांक्षादिसद्भावेऽपि तदर्थबोधेच्छया उच्चरितत्वाभावज्ञाने तदन्यबोधेच्छया उच्चरितत्वज्ञाने वा सति श्रोतुः न तदर्थबोधः इति तेषामाकूतम्।[1]

एवञ्च एतदनुसारेण वाक्यविषयकं तात्पर्यज्ञानं सर्वत्र शाब्दबोधे कारणम्। तच्चेदं वाक्यमेतदर्थबोधेच्छया वक्त्रा उच्चरितमित्येवं रूपम्। नानार्थकपदस्थले तु इदं पदमेतदर्थबोधेच्छया उच्चरितमित्येवम् पदविषयकमपि तात्पर्यज्ञानं कारणम्[2]। केचित्तु नानार्थकस्थले एव तात्पर्यज्ञानम् बोधे कारणम् न तु सर्वत्र इत्याहुः[3]। शाब्दिकास्तु तात्पर्यज्ञानस्य कुत्रापि शाब्दबोधे कारणत्वं नाभ्युपगच्छन्ति। तन्मतानुसारेण तात्पर्यज्ञानं भवतु, मा वा भवतु, योग्यताज्ञानमिव तात्पर्यज्ञानमपि अविगणय्यैव पदार्थोपस्थित्याकांक्षादिसत्त्वे शब्दाद्बोधो भवत्येव।

एतेषामयमाशयः- तात्पर्यज्ञानस्य शाब्दबोधे अनपेक्षणादेव दैववशसम्पन्नात् मूर्खबालककृतोत्तमकाव्यादितः तादृशवक्तृतात्पर्याभावनिश्चयेऽपि श्रोतुः बोधः[4]। अस्माद् वाक्याद् बोधद्वयं जायते तात्पर्यम् तु क्व इति न जानीमः, इति सर्वजनीनः अनुभवश्चोपपद्येत। अत एव च "पय आनय" इत्युक्ते अप्रकरणज्ञस्य

---------------

1- न्याय सि0मु0-शब्द0-पृ0 427-28
2- तदेव- "वक्तुरिच्छा तात्पर्यम्। का0 -82
3- वे0प0, आ0पृ0-पृ0 255
4- वै0सि0ल0म0- तात्पर्यनिरूपणम्

दुग्धं जलं वा आनेयमिति संदेहः उपपद्यते[1]। तात्पर्यज्ञानस्य बोधकारणत्वे तु एवम्विधे स्थले तात्पर्यज्ञानाभावाद् बोधस्यैवाभावे उक्तसंदेहः कथं संगच्छताम्।

तात्पर्यज्ञानस्य शाब्दप्रक्रियायाम् सर्वथैव नोपयोग इत्यपि न। तात्पर्यज्ञानम् शब्दजन्ये बोधे प्रामाण्यं ग्राहयत् प्रवृत्त्यादौ उपयुज्यते। तात्पर्यज्ञानं शाब्द बोधे न कारणमपितु तत्र प्रामाण्यग्रहे कारणमिति तु तत्त्वम्[2]। एवम् तदर्थबोधेच्छया उच्चरितत्वाभावज्ञानं तदन्यबोधेच्छयोच्चरितत्वज्ञानं न शाब्दबोधं प्रतिबध्नाति, बोधस्तु भवत्येव पदार्थोपस्थित्यादिसत्त्वे। उक्तज्ञानन्तु जायमाने बोधे अप्रामाण्यमात्रम् ग्राहयति, तद्द्वारेण च प्रवृत्त्यादिकम् प्रतिरुणद्धि। अप्रामाण्यज्ञानानास्कन्दित एव हि बोधः प्रवृत्त्यादावुपयुज्यते। एवञ्च शाब्दप्रक्रियायां या गतिः योग्यताज्ञानस्य सैव तात्पर्यज्ञानस्यापि।

तात्पर्यञ्चेदं वाक्यं, पदं वा अमुमर्थं बोधयतु इत्याकारा वक्तुरिच्छैव। "वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्"[3] तन्निश्चायकानि च प्रकरणादीनि। तदाह हरिः –

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।

अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य सन्निधिः ।।

---------------

1– व्या०म०भा०– 1/1/23
2– वै०सि०ल०म०–पृ० 534
3– न्या०सि०मु०–का०–84

सामर्थ्यमौचिती देशः कालोव्यक्तिः स्वरादयः ।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।।

इमे च संयोगादयः प्रायेण नानार्थकपदस्थले पदविषयकतात्पर्य-निश्चायकाः। वाक्यविषयकतात्पर्यनिश्चायकास्तु उपक्रमोपसंहारादयः। तदुक्तम्-

उपक्रमोपसंहाराभ्यासौ पूर्वताफलम् ।

अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ।।

तदयमस्य सर्वस्य विवेचितस्य अस्मदभिलषितो निष्कर्षः

शब्दजे बोधे शक्तिज्ञानम् आकांक्षा चेति द्वयमेव मुख्यं कारणम्, शक्ति-विषयकः पदार्थविषयको वा उद्बुद्धसंस्कारः पदार्थस्मरणं चेत्यादिकम् सर्वं शक्ति-ज्ञानेनैव गतार्थम् । आप्तोक्तत्वज्ञानं योग्यताज्ञानं तात्पर्यज्ञानंचेति त्रयमपि तत्र बोधे केवलम् प्रामाण्याधायकं न तु बोधजनकम्। एवम् तद्विपरीतमनाप्तोक्तत्व-ज्ञानम्, अयोग्यतानिश्चयः, तात्पर्यव्यतिरेकनिश्चयश्च शब्दजन्ये बोधे अप्रामाण्य-प्रयोजकम् न तु बोधप्रतिबन्धकम्। बोधस्तु सर्वस्मादेव वाक्यात् अनिवार्य एव यदि पदार्थोपस्थित्याकांक्षे स्तः। तद्वाक्यम् आप्तोक्तं वा भवतु अनाप्तोक्तं वा , योग्यं वा अयोग्यं वा, वक्तृतात्पर्यविषयार्थप्रतिपादकं वा तदप्रतिपादकं वा ।

शब्दमात्रस्य प्रामाण्यम्-

---

इयमप्यत्र एकावधारणा यत् सर्वः शब्दः स्वतः प्रमाणमेव। शब्दजन्ये बोधे प्रामाण्यम् नोपपत्तिमपेक्षमपितु स्वाभाविकम् । अप्रामाण्यन्तु उपपत्तिमपेक्षते।

---

1- वा०प० 2/ 396-98

अनाप्तोक्तत्वायोग्यतानिश्चयादिकम् तत्राप्रामाण्यग्राहकम्। एतदभावे तु आप्तोक्तत्वज्ञानादिकम् विनापि शब्दस्य तज्जन्यबोधस्य वा प्रामाण्यम्, यतस्तत् स्वत एव§ स्वाभाविकमेव§ इत्युक्तम् अत एव वेदापौरूषेयत्वसिद्धान्ते वेदशब्दानाम् प्रामाण्यम्। अस्मिन् सिद्धान्ते हि वेदानाम् सर्वथानुक्तत्वेन आप्तोक्तत्वस्य इव अनाप्तोक्तत्वस्यापि तत्राभावात् न किंचित् तत्राप्रामाण्यग्राहकम् । यतश्च न किंचिदप्रामाण्यसाधकमतः प्रामाण्यम्। पक्षोऽयं नागेशेन मञ्जूषायामित्थं दर्शितः "वस्तुतः सर्वः शब्दः प्रमाणमेव। अनाप्तोक्तत्वज्ञानन्तु तज्जन्यज्ञाने अप्रामाण्यग्राहकम् ।"[2]

-----------

1- वै०सि०ल०म०-पृ० 534
वेदस्याकर्तृकत्वे तु अनाप्तोक्तत्वाभावज्ञानं हेतुः ।
तच्चाप्तोक्तज्ञानात् अनुक्तत्वनिर्णयाद् वा इत्यन्यत् ।

2- तदैव, पृ० 536

## "स्फोटसिद्धान्तसमीक्षा"

1- वाचकशब्दविषये दर्शनान्तरीया दृष्टिः

2- अत्र विषये शाब्दिकानां दर्शनम्

3- स्फोटस्य स्वरूपं स्वीकार्यता च

4- एकत्वं नित्यत्वं विभुत्वञ्च

5- शब्दस्य अवस्थाचतुष्टयम्

6- वैखरीविषयकं दर्शनचतुष्टयम्

7- शब्दस्य स्फोटावस्था

8- स्फोटस्य बोधजनकता

9- स्फोटवादे प्रतिवादिनां प्रत्यवस्थानं तत्समाधानञ्च

10- स्फोटस्य अष्टविधता

11- वर्णस्फोटः

12- वर्णपरिभाषा

13- वर्णानां वाचकत्वे दर्शनद्वयम्

14- वर्णस्फोटविषये स्थान्यादेशविकल्पः

15- दर्शनान्तरीयतम्

16- शाब्दिकमतम्

17- वर्णस्य व्याख्यान्तरम्

18- पदस्फोटः

19- वाक्यस्फोटः- वाक्यस्वरूपम्

20- वाक्यस्य वाचकता व्यवस्थापनम्

21- पदस्य वाक्यरूपेणैव वाचकत्वम्

22- पदार्थेभ्यः पृथक् वाक्यार्थस्य व्यवस्थापनम्

23- वाक्यशक्तिग्रहविमर्शः

24- त्रयो जातिस्फोटाः

25- आनुपूर्वीभेदेन जातिभेदः

26- अखण्डपदवाक्यस्फोटौ

27- पदवाक्ययोरखण्डत्वे वाक्यपदीयसम्मतिः

28- पदवाक्ययोः वर्णपदाविभागे बीजम्

29- पदपदार्थादीनां काल्पनिकत्वम्

30- प्रकृतिप्रत्ययादीनां काल्पनिकत्वे पञ्चकोषदृष्टान्तः

31- षोडशस्फोटकल्पना

32- द्वात्रिंशत्संख्याकाः स्फोटाः

33- स्फोटभेदे प्रमाणम्

## वाचकशब्दविषये दर्शनान्तरीया दृष्टिः

शब्दस्य प्रामाण्यविषये मतैक्यं भजतामपि दार्शनिकानां वाचकशब्द विषयेऽस्ति विमतिः । विषयेऽस्मिन् मुख्यतया द्वे विचारधारे, श्रोत्रेन्द्रियग्राह्याः नादात्मकाः तावन्तस्तावन्तो वर्णाः एव वाचकाः इत्येका, तदतिरिक्तं तावत्तावद्वर्णध्वन्यभिव्यंग्यम् पदात्मकतया वाक्यात्मकतया वा बुद्धिनिर्ग्राह्यं स्फोटाख्यं शब्दतत्त्वम् वाचकमित्यपरा। तत्राद्यविचारधारायाम् शाब्दिकातिरिक्ताः सर्वेऽपि दार्शनिकाः समाविशन्ति, यद्यपि तेषामपि अस्त्यवान्तरो विशेषः । द्वितीयविचारधारायाः प्रतिष्ठापकास्तु शाब्दिका एव। तथाहि कण्ठ ताल्वाद्यभिघातजन्याः नादात्मकाः "घटः " इत्याद्युक्ते क्रमेण श्रूयमाणाः उच्चरितप्रध्वंसिनोवर्णा एव वाचकाः न तु तदतिरिक्तं किञ्चित् पदम् वाक्यं वा अस्ति यद् वाचकमिति वर्णानित्यत्ववादिनो नैयायिका आमनन्ति।[1] वर्णनित्यत्ववादिनां मीमांसकादीनामपि एतद्देशीय एव पक्षः। इयांस्तु विशेषः यत् नैयायिकमते वर्णाः कण्ठताल्वाद्यभिघातजन्याः, अत एव च उच्चरितप्रध्वंसिनः। मीमांसकादिमते तु वर्णाः नित्याः विभवश्च, भिन्नाश्च परस्परस्मात्। एवञ्च "घट" इत्यादौ सन्त एव घकारादयो वर्णाः तत्तत्कण्ठताल्वाद्यभिघातैरभिव्यज्यन्ते, अभिव्यक्ताश्च भवन्ति बोधहेतवः[2] । यथा अनित्यवर्णवादिनां नैयायिकादीनाम् वर्णानां स्थितिः क्षणिका, एवमेतेषामभिव्यक्तिरपि क्षणिका। एवञ्च वर्णानां नित्यत्वानित्यत्वकृत एव अनयोः पक्षयोः विशेषः। यावत्कण्ठताल्वाद्यभिघातैः

---

1- शबरभाष्यम्-सू0- 1/1/1,

2- तस्मात्तद्व्यञ्जकध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्वन्त स्मर्यमाणा वर्णा वाचकाः नान्यः शब्दोऽस्ति।
- शास्त्रदीपिका- 1/1/5

उत्पद्यमानानाम् अभिव्यज्यमानानां वा वर्णानां वाचकत्वम् न तु तदतिरिक्तस्य पदस्य वाक्यस्य वा इति, तावत् साम्यमेव पक्षयोरनयोः। नैयायिकमत इव मीमांसकादिमतेऽपि श्रूयमाणतत्तद्वर्णातिरिक्तं न किमपि पदम् वाक्यं वा अपितु तावन्तस्तावन्तो वर्णा एव तत्तदनुभवजनितसंस्कारवशेन युगपत्स्मृतिविषयतां प्रापिताः पदादिव्यपदेशं भजन्ते।[1] तदुक्तं मीमांसकमतम् उपस्थापयता वाक्यपदीयकारेण-

न वर्णव्यतिरेकेण पदमन्यत्प्रसिद्ध्यति।

वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन ॥[2]

ब्रह्मसूत्रशाङ्करभाष्येऽपि पक्षोऽयं दर्शितः " वर्णा एव शब्द इति भगवानुपवर्षः"।[3] अथास्मिन् पक्षद्वयेऽपि उच्चरितप्रध्वंसिभिः क्षणिकाभिव्यक्तिकैः वा, अत एव च युगपद्ग्रहीतुमशक्यैः तावद्भिः तावद्भिः वर्णैः कथमर्थबोधः इति चेत् इत्थम् - पूर्वपूर्ववर्णानुभवजनितसंस्कारसध्रीचीनेन चरमवर्णानुभवजनितसंस्कारेण तावन्तो वर्णाः युगपत्स्मरणविषयतां नीयन्ते, नहि स्मृतौ विषयाणां सत्तापेक्ष्यते। तावतां वर्णानाम् तत्तत्संस्कारोपनीतं समूहालम्बनात्मकम् इदं स्मरणमेव पदज्ञानमुच्यते, एतद्रीत्यैव च वाक्यज्ञानमपि शक्योपपादनम्। एवञ्च क्रमिकोत्पत्तिकानाम् क्रमकाभिव्यक्तिकानां वा वर्णानाम् युगपदनवस्थानेन प्रत्यक्षात्मकस्य वर्णसमूहज्ञानस्य असंभवेऽपि उक्तरीत्या स्मृत्यात्मकेन पदवाक्यादिज्ञानेन अर्थबोध उपपद्यते।[5]

अत्र विषये शाब्दिकानां दर्शनम् -

शाब्दिकास्तु कण्ठताल्वाद्यभिघातजन्यध्वन्यात्मकानां वर्णानां न वाचकत्वम्, अपितु तैः ध्वनिभिः अभिव्यक्तं पदादिरूपेण गृह्यमाणैकम् शब्दतत्त्वम् अर्थस्य

---

1- मीमांसासूत्रम्- 1/1/5
2- वा०प० 1/62
3- ब्रह्मसूत्रशाङ्करभाष्यम् 1/3/9/28
4- यथापिस्मृति हेतुत्वं संस्कारस्य व्यवस्थितम्। श्लोकवार्तिक- पृ० 536
5- न्यायमञ्जरी- पृ० 344

प्रकाशकम् तदेव च स्फुटयते- ध्वनिना व्यज्यते इति, स्फुटति अर्थोऽस्मादिति च व्युत्पत्तिभ्यां स्फोट इत्याख्यायते।[1] कण्ठताल्वाद्यभिघातजन्याः उच्चरितप्रध्वंसिनः नैयायिकादिभिः वर्णत्वेन व्यपदिश्यमानाः ध्वनयस्तु उक्तविधस्य स्फोटाख्यस्य वाचकशब्दस्य अभिव्यंजका एव न तु स्वयमर्थस्य वाचकाः इत्यामनन्ति, उपादयन्ति च इत्थमिमं स्वसिद्धान्तम् ।

स्फोटस्य स्वरूपं स्वीकार्यता च-

ध्वन्यात्मकानां वर्णानाम् वाचकत्वं न संभवति विकल्पासहत्वात्, तथाहि प्रत्येकं वर्णा अर्थस्य वाचकाः संहताः वा। न तावत् प्रत्येकं वर्णानाम् वाचकत्वं युज्यते वक्तुं, तथासति आद्यवैनैव अर्थप्रतीतौ सिद्धायाम् द्वितीयादिवर्णानां वैयर्थ्यापत्तिः। नापि संहतानां वर्णानां वाचकत्वं संभवति, उच्चरितप्रध्वंसिना तेषां युगपदनवस्थानेन समुदायासंभवात्[2]। अभिव्यक्तिवादेऽपि उत्पत्तिवदभिव्यक्तेरपि क्षणिकत्वेन क्रमेण अभिव्यज्यमानानां वर्णानाम् यौगपद्येन प्रत्यक्षासंभवेन वर्णसमुदाय-प्रत्यक्षस्यानुपपत्तिः अस्त्येव[3]।

यदपि उत्पत्तिपक्षे वर्णानां युगपदवस्थितिरेव न संभवति, अभिव्यक्तिपक्षे तु संभवति यौगपद्येनावस्थितिः इत्यस्ति विशेषः, तथापि अभिव्यक्तेरपि क्षणमात्र-स्थायित्वेन उत्तरोत्तरवर्णाभिव्यक्तिदशायां पूर्वपूर्ववर्णानाम् तिरोधानात् तेषाम् अवस्थितिरपि अनस्तित्वकल्पा एव। यदपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसध्रीचीनेन

---

1- स्फोटवादः पृ0-5
2- वै0सि0ल0म0- शक्त्याश्रयनिरूपणम्
3- तदुच्चारण सामर्थ्य नैकस्मात् ततो र्थधीः ।
समुदायोऽपि वर्णेषु क्रमजातेष्वसंभवी ।।
- स्फोटसिद्धिन्यायविचारः, 14

चरमवर्णानुभवजनितसंस्कारेण तावतां वर्णानां युगपत्समूहालम्बनात्मकं स्मरणम्, तदेव च पदज्ञानम् इत्युच्यते तेनैव च अर्थबोधः इत्यादिरीत्या वर्णानां वाचकत्वस्य पदादिज्ञानस्य च उपपादनम् तदपि न हृद्यम्, यतः येन क्रमेणानुभवः तेनैव क्रमेण स्मरणमिति नियमाभावेन "सरो रसः" इत्यादौ विशेषः स्यादशक्योपपादनः।
अपि च उक्तरीत्या स्मरणात्मकस्य पदज्ञानस्य उपपादनेऽपि वर्णव्य-तिरेकेण पदस्याभावात् तत्र शक्त्याश्रयत्वग्रहानुपपत्तिः, शक्त्याश्रयत्वेन गृहीतस्यैव च शब्दस्य वाचकत्वम्।[1] तदेवं ध्वन्यात्मकानां क्षणिकोत्पत्तिकानाम् क्षणिकाभि-व्यक्तिकानां वा वर्णानाम् वाचकत्वं न संभवति। तस्मात् कण्ठताल्वाद्यभिघात-जन्यध्वन्यात्मकेभ्यो वर्णेभ्यो तिरिक्तः तदभिव्यंग्यः पदादिरूपेण बुद्धिनिर्ग्राह्यः शब्दः तत्तदर्थवाचकतयाभ्युपगन्तव्यः, स्फोट इति च तस्यैवापरन्नाम। यतः सः ध्वनिभिः स्फुट्यते = अभिव्यज्यते, स्फुटति चार्थः तस्मात्। इममेव च स्फोटाख्यम् ध्वनिव्यंग्यं वाचकशब्दमालक्ष्य "अथ गौरित्यत्र कः शब्दः" इति प्रश्ने "येनोच्चा-रितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति सः शब्दः" इत्युत्तरितं पस्पशायाम् महाभाष्ये[2]।

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते[3]।।

इति वाक्यपदीयेऽपि शब्दस्य या द्वितीयाकोटिः "अपरोऽर्थे प्रयुज्यते" इत्यनेन निर्दिष्टा सा इममेव वाचकशब्दमालक्ष्य। एतदभिव्यंजकं ताल्वाद्यभिघातजन्यं

---------------

1- वै०सि०ल०म०- शक्त्याश्रयनिरूपणम्
2- व्या०म०भा०- पस्पशाह्निकम्
3- वा०प० 1/44

ध्वन्यात्मकं शब्दमभिलक्ष्य तु "एको निमित्तं शब्दानाम् "इत्याद्या कोटिः वेदितव्या। महाभाष्येपि "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दइत्युच्यते" इत्यनेन कोटिरियम् दर्शिता। "लोके" इति वदता भाष्यकृता स्फोटप्रतिपादनपरस्य " येनोच्चारितेन " इत्याद्युपर्युक्तस्य पक्षस्य मुख्यता सूचिता।

एकत्वं नित्यत्वं विभुत्वञ्च -

अयञ्च स्फोटाख्यः शब्दः परमार्थतः एको नित्यो विभुश्च, सर्वार्थशक्तिमान् च अयम् । ताल्वाद्यभिघातजाः परैः वर्णतया व्यपदिश्यमानाः ध्वनयस्तु तदभिव्यंजकाः ध्वन्यभिव्यक्त एव च सः भवति प्रत्यक्षविषयः । अतो नित्यत्वे विभुत्वेऽपि च न सर्वदा सर्वत्र वा तत्प्रत्यक्षापत्तिः ।[2]

यद्यप्यमेकः तथापि अभिव्यंजकध्वनिरूपोपाधिवशेन नाना इव गृह्यते, ध्वनिरूपरूषितस्यैव चास्य ग्रहणम्, अतः ध्वनिरूपप्रमोकेण नायं क्वापि गृह्यते। ह्रस्वत्वदीर्घत्वादिरूपाणि कत्वखत्वादिरूपाणि च सर्वाण्यपि वैजात्यानि ध्वनिगतान्येव शब्दे आरोप्यन्ते। वर्णः पदं वाक्यञ्चेति त्रिधाभेदोऽपि अभिव्यंजकध्वनिप्रयुक्त एव। एक एव-चायं शब्दः तत्तद्वैजात्यविशिष्टैः तत्तत्क्रमविशिष्टैश्च तैस्तैः तावद्भिः तावद्भिः वा ध्वनिभिः अभिव्यज्यमानः तत्तद्वर्णपदादिरूपेण गृह्यते। यादृशैः ध्वनिभिरभिव्यक्तस्य यत्रार्थे संकेतग्रहः तादृशैः ध्वनिभिः अभिव्यक्तेनैव तदर्थबोधः। अतः स्फोटस्य सर्वार्थशक्तिमत्वेऽपि न सर्वत्र सर्वार्थबोधप्रसङ्गः ।

---

1- व्या०म०भा० 1/1/1

2- वै०सि०ल०म०-श०नि०

3- यथा मणिकृपाणादौ मुखमेकमनेकधा।
तथैव ध्वनिषु स्फोटः एक एव विभिद्यते।।
-स्फोटतत्त्वनिर्णयः ।

शब्दस्य अवस्था चतुष्टयम् -

इदमत्र तत्त्वम्, शाब्दिकसिद्धान्ते एकमखण्डं- नित्यं विभु चिदात्मकं नादस्वरूपं शब्दतत्त्वम् अभ्युपगम्यते। [1] एतदेव च सकलस्थूलशब्दोपादानं, किं बहुना जगदुपादानमपि एतदेव। इदमेव च "शब्दब्रह्म" इति गीयते व्यपदिश्यते च "रव" परादिशब्दैः । तदाह हरिः -

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2] ।।

एतच्च सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेन सूक्ष्मतमरूपेणाभिव्यज्यते। इयमस्य सूक्ष्मतमाभिव्यक्तिः न स्थूलदृशाम् अस्माकं प्रत्ययविषयः अपितु योगिनामेव। तदुक्तं " परावाक् मूलचक्रस्था। ततः नाभिपर्यन्तमागच्छता तेनैव वायुना अभिव्यज्यमानम् अत एव च किञ्चिद् विकसितदशामापादितमेतत् शब्दतत्त्वम् पश्यन्ती वाग् इत्युच्यते। तदुक्तम्-"पश्यन्ती नाभिसंस्थिता "इति। इयमपि चावस्था पूर्वावस्थापेक्षया यद्यपि किञ्चित् स्फुटा तथापि नास्मद्वेद्या। एतदवस्थाद्वयमपि सूक्ष्मतमसूक्ष्मतररूपं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषयः। ततः हृदयदेशमागच्छता तेन वायुना हृदयेदेशेऽभिव्यक्तं श्रोत्राविषयोऽपि तत्तच्छब्दविशेषोल्लेखिन्या तत्तदर्थविशेषोल्लेखिन्या बुद्ध्या विषयीकृतमेतद् मध्यमा वागित्युच्यते

---

1- बिन्दोस्तस्माद् भिद्यमानाद् रवो व्यक्तात्मको भवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते।। प्र०सा० 1/43

2- वा०प० 1/1

3- अथ बाह्यान्तःकरणात्मिका हिरण्यगर्भरूपिणी नाभ्यादिहृदयान्ताभिव्यक्तिस्थानानां विशेषस्पन्दसंकल्पादिसत्त्वाद मध्यमावाचमाह ।
प्र०सा०ता०-2 टीकायाम् पृ० 33

तदुक्तम् "हृदिस्था मध्यमाज्ञेया"। अवस्थेयम् अस्माकमपि भवति वेदनविषयः ।
यद्यपि पूर्वोक्तावस्थाद्वयापेक्षया अवस्थेयं स्फुटा स्थूला च तथापि वक्ष्यमाणवैखर्यवस्था
पेक्षया सूक्ष्मत्वात् सूक्ष्मकोटावेव गण्यते। तदेवम् सूक्ष्मासूक्ष्मतरासूक्ष्मतमा चेति तिस्रः
शब्दस्यावस्थाः वेदितव्याः । ततः कण्ठदेशमागच्छता तेन वायुना तत्तत्स्थानेष्व-
भिहत्य उत्पादितैः तैः तैः ध्वनिभिः अभिव्यंजितं तत्तद्वर्णरूपेण श्रोत्रग्राह्यमिदं
शब्दतत्त्वम् "वैखरी वाग् इत्युच्यते, तदुक्तं "वैखरी कण्ठदेशगा शब्दस्य इदम-
वस्थाचतुष्टयं महाभारतेऽपि इत्थं वर्णितम् –

" प्राणापानान्तरे देवी वाग्वै नित्यं प्रतिष्ठिता।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना।
केवलं बुद्ध्युपादानक्रमरूपानुपातिनी ।।
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते ।
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।।
स्वरूपज्योतिरेवान्तः परावागनपायिनी ।।[2]

इदमत्र बोध्यम् यद् यथा वेदान्तिनये एकमेव ब्रह्म, तस्यैव विवर्तोऽज्ञानं तस्य च
विवर्तभूतस्य अज्ञानस्य कारणशरीरं, सूक्ष्मशरीरं, स्थूलशरीरञ्चेति तिस्रः अवस्थाः,
एवमेव अत्रापि अनादिनिधनः पराख्यः सूक्ष्मनादः, तदेव शब्दब्रह्म, पश्यन्ती मध्यमा
वैखर्याख्याः तिस्रो वाचो ब्रह्मणः कारणशरीरादिवत् अस्य शब्दब्रह्मणो विवर्ताः।

---

1– वै०सि०ल०म०– शक्त्याश्रयनिरूपणम् ।
2– वै०सि०म०, शक्तिनिरूपणे उद्धृतम् ।

इदञ्च सर्वं तन्त्रसारानुरोधेन। शाब्दिकमूर्धन्येन भर्तृहरिणा तु तिस्र एव वाचो निर्दिष्टा वाक्यपदीये। तद् यथा-

"वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ।।[1]

अत्र परापश्यन्त्योः ऐक्यमेव मत्त्वा इदं वाचः त्रैविध्यम् हरिणा उक्तम् आहोस्वित् तुरीयायाः परायाः अतिरिक्तत्वेऽपि पश्यन्त्यादीनां तिसृणामेव व्याकरणविषयता इत्येतत् तात्पर्येण वाचस्त्रैविध्यमुक्तम् इति तु चिन्त्यम् ।

यद्यपि कैश्चिद् व्याख्याकारैः उपर्युक्त हरिकारिकाव्याख्यावसरे हरिमते तिस्र एव वाचः इति महता प्रयत्नेन समर्थितम्,। मञ्जूषायां नागेशभट्टैः उक्तं वाचश्चातुर्विध्यम् तु तन्त्रवासनावासितम् इति च उक्तम्,तथापि नैतदस्मभ्यं रोचते। उपर्युक्तहरिकारिकायाम् "त्रय्या वाचः परं पदम् "इति वदतो वाक्यपदीयकारस्य तिसृणामेव पश्यन्त्यादीनां वाचां व्याकरणविषयत्वम् अभिप्रेतम् इत्येव वक्तुं शक्यम्, नैतावता तुरीया परा वाग् वाक्यपदीयकारस्य सर्वथा अनभिप्रेता इति कथनमुचितम् ।

वैखरीविषयकं दर्शनचतुष्टयम्

योऽयं वैखर्यात्मकः कण्ठताल्वाद्यभिघातजन्यः तद्व्यङ्ग्यो वा परश्रोत्रग्राह्यः स्थूलशब्दः शब्दतत्त्वस्य चतुर्थावस्थारूपः,यश्च शाब्दिकैः बाह्यस्फोट इत्याख्यातः तद्विषये पक्षचतुष्टयम् वाक्यपदीये लभ्यते। दर्शनमिदं नागेशेन

---

1- वाक्यपदीयम्- 1/143

मञ्जूषायां वैखरीविषयकतया उपन्यस्तम् " वैखरी तु[1] - -। तथाच वाक्यपदीयम्-

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ।। 2

तत्र वायोः शब्दरूपेण परिणाम इत्येकं दर्शनम् ।
दर्शनमिदं प्रातिशाख्यकाराणाम्[3] । पक्षोऽयं हरिणा इत्थं व्याख्यातः।

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ।।4

एतदनुसारेण वर्णविवक्षया वक्त्रा मूलाधारादुद्गमितः उदानवायुरेव मध्यवर्तिनो हृदयादिदेशानाक्रम्य वक्तृप्रयत्नानुसारेण तत्तद्बाह्याभ्यन्तरव्यापार-सहकृतः ताल्वादिषु तत्तत्स्थानेषु अभिहतः शब्दभागेन परिणमति इति दधि दुग्धस्य इव शब्दः वायोरेव परिणामः।

अणुसंघात एव शब्द इति द्वितीयं दर्शनम् , दर्शनमेतद् आर्हतानाम्[5] । एतच्च हरिणा वाक्यपदीये इत्थं वर्णितम् -

---

1- वै०सि०ल०म०- शक्त्याश्रयनि० पृ० 154

2- वाक्यपदीयम् - 1/107

3- वायुःशात- शु०य० प्रातिशाख्यम् अ० 1/6
वायुः कारणभूतः शब्दस्य स च शादाकाशादुत्पद्यते ।
शब्दस्तत् - तदेव - 1/7
शब्दस्तदात्यको वायवात्मक इत्यर्थः ।

4- वा०प०- 1/108

5- "परमाणुपरिणामः शब्दः " इत्यार्हताः ।
वै०सि०ल०म०-स०प्र०, पृ० 154

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
छायातपतमः शब्दभावेन परिणामिनः।।
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः[1] ।।

अस्मिन् दर्शने पृथिव्यादिद्रव्यान्तरणामिव छायातपतमःशब्दानामपि आरम्भका अणव एव। अणुसंघातरूपा एव च इमेऽपि पदार्थाः। तत्र शब्दस्यारम्भका अणवो वक्तृप्रयत्नप्रेरितेन मुख्यान्निर्गच्छता वायुना अभ्राणीव संहन्यमानाः सन्तः स्थूलशब्दरूपतां यान्ति। यथाहि वायुः आकाशे यत्र तत्र विकीर्णान् सूक्ष्मान् अभ्रखण्डान् संहत्य महन्तमभ्रमारचयति एवम् शब्दस्यापि सूक्ष्मा अणवः सर्वत्र व्याप्ताः परम् असंहता,अतो न सर्वदा सर्वत्र वा शब्दावभासः। यदा तु ते अणवः संहन्यन्ते तदा यान्ति श्रोत्रग्राह्यशब्दरूपताम्। तेषामणूनां संहारकश्च वायुरेव, स च वक्तृप्रयत्नानुसारेण तान् अन्यथा अन्यथा संहरन् नानावर्णरूपतां नानाशब्द-रूपतां वा तेषु आदधाति। पातञ्जलदर्शनस्य व्यासभाष्येऽपि शब्दविषयकमिदं पक्षद्वयं प्रदर्शितम्[2] ।

पराशक्तिसहकृतं वक्तृज्ञानमेव शब्दरूपेण परिणमति इति तृतीयं दर्शनम् पराशक्तिसाहित्येन च तत्तत्परिणामः इति[3] । दर्शनमेतद् वाक्यपदीयकारः इत्थं व्याख्यत् -

---------------
1- वा0प0- 1/110-11
2- योगसूत्रे भाष्येमापि उक्तम्- वागिन्द्रियं वर्णेष्वेवार्थवत् ।
श्रोत्रञ्च ध्वनिपरिणाममात्रविषयम् इति। ध्वनिर्नाम-
वागिन्द्रियादावुदानवायोरभिघाताज्जायमानः उदानवायोःआकाशस्य
परमाणूनां वा परिणामभेदः।
वै0 सि0ल0म0-र0प्र0पृ0 154
4- वै0सि0ल0म0- शक्त्याश्रयनि0

अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितिः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते[1]।।

आख्यातोपयोगे[2], इति सूत्रे भाष्येऽपि पक्षोऽयं लभ्यते। तत्र हि उक्तसूत्रं प्रत्याचक्षाणः भाष्यकारः एवमाह- "अयमपि योगः शक्यो वक्तुम्। कथमुपाध्यायाद- धीते इति? अपक्रामति तस्मात् तदध्ययनम्। यद्यपक्रामति किं नात्यन्तायापक्रामति? सन्ततत्वात् अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" इत्युक्तम्[3]। अनेन च अन्तःस्थस्य ज्ञानस्य शब्दरूपेण बहिर्निर्गमनमुक्तमिति ज्ञानस्य शब्दरूपता अस्माद्भाष्याल्लभ्यते।

सूक्ष्मवागात्मना अन्तःस्थितायाः पराशक्तेरेव मध्यमावद् वैखर्यात्मकः शब्दोऽपि परिणामः। पराशक्तिरेव "आत्मा बुद्ध्या समेत्यार्थान्"-इत्यादिपाणिनी- यशिक्षोक्तरीत्या वैखर्यात्मकस्थूलशब्दभावम् आपद्यते इति तु अत्र विषये तुरीयं दर्शनम्। इदमेव च वस्तुतः शाब्दिकानामाकूतम्। तदाह मंजूषायां नागेशः- पराशक्तेरेव मध्यमावत्परिणामविशेषोऽन्येषां मते वैखरी इति सूचितम्। शिक्षाया अपि परावा- च्यमन्तःस्थितं शब्दम् वर्णत्वेनाभिव्यनक्ति इत्यर्थः[4]।

शब्दस्य स्फोटावस्था -

ततः वैखर्यात्मकाः क्रमेण श्रवणगोचरतां गताः वर्णाः उत्तरोत्तरमभिव्यक्त्य- तिशयमादधानाः श्रोतुः हृदयदेशे बुद्धिनिग्राह्यं व्यंजकक्रमानुसारेण व्यंजकरूपानुसारेण

---

1- वा०प०- 1/112
2- पा०सू०- 1/3/29
3- व्या०म०भा०-1/3/29
4- वै०सि०ल०म०- शक्त्याश्रयनिरूपणम्।

च व्यंजकरूपरूषितमेकम् शब्दं पदादिरूपेणाभिव्यंजन्ति। तनैव च श्रोता अर्थं प्रतिपद्यते। अयमेव मध्यमावस्थां गतः शब्दः अर्थस्य वाचकः,वैखर्यवस्थां गतः क्रमेण श्रूयमाणस्तु एतस्य व्यञ्जकः। एवञ्च स्फोटस्य द्वे रूपे बाह्यस्फोट आन्तरस्फोटश्चेति। तत्र बाह्यः उच्चारयित्रा कण्ठताल्वाद्यभिघातैः तज्जन्यध्वनिभिर्वा तत्तद्वर्णरूपेणाभिव्यञ्जितः वैखर्यवस्थामापन्नः शब्दः, 'आन्तरस्तु श्रोत्रग्राह्यवैखरीसंस्कृतान्तः-करणग्राह्यः वैखर्यात्मकेन उक्तरूपेण बाह्यस्फोटेन श्रोतुः हृदयाकाशेऽभिव्यञ्जितः मध्यमावस्थः शब्दः ।

स्फोटस्य बोधजनकता –

अयञ्च शब्दः यद्यप्येकः अखण्डश्च,अभिव्यज्यते च प्रत्येकं वर्णेन तथापि उत्तरोत्तरवर्णैः क्रमेण अभिव्यक्तयतिशयमापादितः अर्थबोधार्थं यावानतिशयोपेक्षितः तावन्तमभिव्यक्त्यतिशयं चरमवर्णेन प्रापितः भवत्यर्थबोधहेतुः। अतः नैकवर्णजाभि-व्यक्त्युत्तरमर्थप्रत्ययः।[1] एकोऽप्ययं व्यञ्जकवर्णाध्यासात् नाना इव गृह्यत इत्युक्तम्। तत्र येन क्रमेण व्यञ्जकानां ध्वनीनां वर्णानां वा चित्ते संस्कारः तेनैव क्रमेण भवत्यस्य व्यञ्जकरूपरूषितता। अतः "सरो रसः" इत्यादौ उपपद्यते विशेषः।[2]

तावतां वर्णानां समूहालम्बनस्मरणात्मकम् पदादिज्ञानमभ्युपागच्छतां तनैव च अर्थबोधमुपपादयतां स्फोटप्रतिवादिनां परेषां तु येन क्रमेणानुभवः तेनैव क्रमेण स्मरणमिति नियमाभावात् "सरो रसः" इत्यादौ विशेषो दुरूपपाद एव ।

---

1- स च यद्यपि एकोऽखण्ड एकैकवर्णेनाभिव्यज्यते तथापि अन्त्यवर्णाभिव्यक्तो भवति बोधहेतुः। अतो नैकवर्णजाभिव्यक्त्युत्तरमर्थप्रत्ययः। वै0सि0ल0म0-श0नि0

2- तदेव- पृ0 15।

3- न च तथेह वर्णानां नित्यानां विभूना चास्ति वास्तवः क्रमः। भामती-पृ0 160

स्फोटवादे प्रतिवादिनां प्रत्यवस्थानम् तत्समाधानञ्च-

अत्र केचन स्फोटप्रतिवादिनः प्रत्यवतिष्ठन्ते- कण्ठताल्वाद्यभिघातजध्वन्यात्मकानां वर्णानामर्थवाचकत्वपक्ष इव तेषां स्फोटाभिव्यञ्जकत्वपक्षोऽपि प्रत्येकसमुदायादिविकल्पग्रस्तः । तथाहि, यदि प्रत्येकं वर्णानां स्फोटाभिव्यञ्जकत्वं तदा आद्यवर्णेनैव तदभिव्यक्तौ द्वितीयादिवर्णानां वैयर्थ्यापत्तिः। समुदितानां तेषां वाचकत्वमिव स्फोटाभिव्यञ्जकत्वमपि न संभवति, उच्चरितप्रध्वंसिनां ध्वनीनां तदात्मकानां वर्णानां वा समुदायासंभवात्। एवम् स्थिते-

"यथोरेव समो दोषः परिहारः तयोः समः ।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे ।।[2]

इति अभियुक्तोक्त्यनुसारेण वर्णानां वाचकत्वपक्षः न पर्यनुयोगमर्हति, प्रत्युत पक्षोऽयं लघीयान् स्फोटवादात् । स्फोटवादे हि वर्णेभ्योऽतिरिक्तस्य स्फोटाख्यस्य शब्दस्य कल्पनाप्रयुक्तम् गौरवमतिरिच्यते[3] । उत्तरवर्णप्रत्यक्षकाले संस्कारवशात् अव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्त्वं गृह्यते। एवम् तदुत्तरवर्णप्रत्यक्षकाले पूर्ववर्णविशिष्टतद्वर्णवत्त्वं तस्मिन् वर्णे गृह्यते। एवं क्रमेण तदुत्तरवर्णे विशिष्टतत्तत्पूर्ववर्णवत्त्वं गृह्यत इत्यभ्युपगमनेन चरमवर्णप्रत्यक्षानन्तरं बोधः, "सरो रसः" इत्यादौ विशेषश्चोपपद्येते[4] । तदेवम् श्रूयमाणानां वर्णानां वाचकत्वं शक्योपपादनमितिकृतं तदतिरिक्तस्फोटकल्पनया इति।

------------------

1- प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ।
सांख्यसूत्र- 5/57-58,

2- सांख्यसूत्रनिरुद्धवृत्ति- 1-6

3- दृष्टस्य वर्णामामर्थबोधकत्वस्य हानिः अदृष्टस्य स्फोटस्य कल्पनेति न सोढव्यम्- ब्र०सू०शा०भा०- 1/1/1/28

4- उपलब्धिक्रमस्योपलभ्यमानवर्णेष्वारोपेण "राज-जरा" इत्यनयोर्विशेषः सम्पादनीयः। ब्र०सू०शा०भा०- 1/1/1/28

अत्रायं समाधिः उक्तरीत्या कथञ्चिद् वर्णेभ्यः बोधोपपादनेऽपि वर्णसमुदायात्मकस्यपदस्य वस्तुतो सत्त्वेन तत्र शक्त्याश्रयत्वग्रहानुपपत्तिः, शक्त्याश्रयत्वेन गृहीतमेव च पदं भवति बोधहेतुः। स्फोटवादे तु वर्णेभ्योऽभिव्यज्यमानः स्फोटाख्यः शब्द एव शक्त्याश्रयः[1]। वर्णानां स्फोटाभिव्यञ्जकत्वपक्षे प्रत्येकसमुदायादिविकल्पस्तु नावसंर लभते, यतः रत्नपरीक्षणन्यायेन श्लोकावृत्तिन्यायेन वा प्रत्येकमेव वर्णः स्फोटमभिव्यनक्ति, उत्तरोत्तरवर्णेन च तदभिव्यक्तावतिशयः आधीयते।

स्फोटेनार्थप्रतीतौ तस्य यावानभिव्यक्त्यतिशयः अपेक्षितः तावान् चरमवर्णेन क्रियते, अतो न प्रत्येकवर्णजाभिव्यक्त्युत्तरमर्थप्रत्ययः। तथाहि यथारत्नपरीक्षकः रत्नानां भूयोभूयः दर्शनैः- दर्शनाभ्यासेनेति यावत्- रत्नगतं विशेषं प्रतिपद्यते- रत्नविषयिणीम् विशेषज्ञतामासादयति-यथा स याथातथ्येन रत्नस्वरूपं विनिश्चिनोति, तत्र तस्य या रत्नस्वरूपाभिव्यक्तिः तस्यां प्रत्येकं दर्शनम् अपर्याप्तमपि हेतुतां भजत्येव। पूर्वपूर्वदर्शनजाभिव्यक्तिः उत्तरोत्तरदर्शनैः प्रकृष्यते। प्रत्येकं दर्शनं मात्रया रत्नस्वरूपाभिव्यक्तिं तु जनयत्येव। यावानभिव्यक्तिप्रकर्षः याथातथ्येन तद्विनिश्चयेऽपेक्षितः तावान् शताधिकेन सहस्राधिकेन वा दर्शनेनाधीयत इत्यन्यत्। यथा वा श्लोकः जोघुष्यमाणः शताधिकाभिः आवृत्तिभिः सहृयतां याति- सम्पूर्णतया स्मृतिविषयतां याति- कण्ठस्थो भवतीति यावत्। तत्रयस्या आवृत्तेरनन्तरम् स श्लोकः भवति सहृयः न सैवावृत्तिः तस्य सहृयत्वमादधाति अपितु प्रत्येकमावृत्तिः।

---

1- क्रमवत्त्वेऽपि संभूय जनयन्ति फलं तथा।
प्राचीनवर्णानुभवसंस्कारसहितोत्तमः।
स्फोटसिद्धिन्यायविचारः-14

प्रत्येकमावृत्या स्मरणानुकूलः संस्कारः मात्रया आधीयते। पूर्वपूर्वावृत्त्याहितसंस्कारः उत्तरोत्तरावृत्तिभिः प्रकर्षं प्राप्यते- दृढी क्रियते इति यावत्। संस्कारस्य यावद्दृढीकरणं श्लोकस्य सहृदयत्वेऽपेक्षितं तावत् चरमावृत्तया क्रियते इति वस्तुस्थितिः। एवम्प्रकृतेऽपि प्रत्येकं वर्णेन स्फोटात्मकः शब्दोऽभिव्यज्यते,न च तावता अर्थप्रत्ययः अभिव्यक्तिप्रकर्षस्य अर्थप्रत्ययेऽपेक्षणात् स च चरमवर्णेन संपाद्यते। तदेतत् सकलमभिसंधायाह वाक्यपदीयकारः-[1]

यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।
आवृत्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ।।[2]
प्रत्ययैरनुपाख्येयैः ग्रहणानुगुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ।।[3]

तदेवं ताल्वाद्यभिघातजध्वन्यात्मकैः वर्णैरभिव्यंग्यः स्फोटात्मा शब्द एव अर्थस्य वाचकः न तु श्रूयमाणाः उच्चरितप्रध्वंसिनः ध्वनयः तदात्मकाः वर्णाः वा इति- स्थितम्।

स्फोटस्य अष्टविधता-
---------------

यद्यपि शाब्दिकसिद्धान्ते एकमेव शब्दतत्त्वं विभु नित्यश्च, सर्वार्थशक्तिमत् अत एव सर्वार्थवाचकं स्फोटपदव्यपदेश्यञ्च। सर्वविधैरपि ध्वनिभिः तस्यैव विभिन्नैः

----------------

1- स्वाभिव्यञ्जकध्वनिभिरभिव्यक्तः पूर्वपूर्ववर्णः अभिव्यक्तेः उत्तरोत्तरस्मिन् वर्णे संस्कारमाधत्ते।
वा०प०- 1/82,अम्बाकर्त्री।

2- वाक्यपदीयम्- 1/82

3- वा०प०- 1/83

रूपैरभिव्यञ्जनम्, तदेव च अभिव्यञ्जकवैलक्षण्येन कदाचिद्वर्णरूपेण वर्णेष्वपि च कदाचित् "क" रूपेण कदाचित् खादिरूपेण, कदाचित् पदरूपेण, पदेष्वपि च कदाचित् " पचति " इत्येवं पदरूपेण, कदाचित् गच्छत्यादिपदरूपेण। अथ कदाचिद् वाक्यरूपेण वाक्येष्वपि च "घटमानय" "गां नय " इत्यादितत्तद्वाक्यरूपेणभिव्यज्यते। परमार्थतस्तु एकमेवाद्वयं शब्दतत्त्वम्, तथापि स्फोटात्मनः अप्येकस्य शब्दस्य औपाधिकी: व्यावहारिकी वा तिस्रोऽवस्था अभ्युपगम्यन्ते- वर्णः पदं वाक्यञ्चेति। अत्र वर्ण-शब्देन प्रकृतिप्रत्ययादिरूपाः शास्त्रकृत्कल्पितवाचकत्वाश्रयाः पदांशाः ग्राह्याः न तु ककारखकारादयः प्रत्येकं वर्णाः । एषां कल्पितवाचकत्वस्यापि अभावेन स्फोटपद-व्यपदेश्यत्वाभावात्। आसु अवस्थासु पूर्वपूर्वावस्था उत्तरोत्तरावस्थायाः अन्वा-ख्याने उपायभूता। तदेवं व्यावहारिकीष्वपि आसु त्रिसृषु स्फोटविधासु वाक्या-त्मिकायाः चरमायाः विधायाः आपेक्षिकं पारमार्थिकत्वम्। अस्या एव लाघवेना-न्वाख्यानार्थं तदात्मिका द्वितीया विधा, तामपि च आञ्जस्येनान्वाख्यातुं वर्णात्मिका आद्या विधा शास्त्रकारैः कल्पिता। वर्णतदर्थबोधनद्वारेण पदतदर्थ-बोधेन तद्द्वारेण च वाक्य-वाक्यार्थबोधने एव शास्त्रकाराणां तात्पर्यम् ।

एतासां तिसृणां स्फोटविधानाम् पुनः प्रत्येकं जातिव्यक्तिभेदेन द्वे विधे, पुनश्च पादवाक्ययोः सखण्डाखण्डभेदेन प्रत्येकं द्वे विधे। तदित्थम्- वर्णस्फोटः पदस्फोटः वाक्यस्फोटः वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजातिस्फोटः अखण्ड-पदस्फोटः अखण्डवाक्यस्फोटश्चेति स्फोटस्य व्यावहारिक्यः अष्टौ विधाः शाब्दि-कैराश्रीयन्ते, आसु च अष्टसु स्फोटविधासु वाक्यस्फोटो मुख्यः, तत एव अर्थप्रतीतेः अर्थपरिसमाप्तेश्च। तदुक्तं भूषणे[1]-

---

1- वैoभूoसाoस्फोटनिर्णये- पृo 45।

"वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः[1] नागेशोऽप्याह"
"वाक्यस्फोटो मुख्यः ।"[2]

अपोद्धारपदार्थ ये ये चार्थाः स्थितलक्षणाः ।

अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः।[3]

इत्यनेन वाक्यपदीयकृतापि वाक्य-वाक्यार्थयोः मुख्यत्वं ध्वनितम्। इदमत्रध्येयम् यदिदं वाक्यस्य मुख्यत्वं पारमार्थिकत्वं वा तदापेक्षिकमेव। वर्णपदापेक्षया वाक्य-रूपं पारमार्थिकमित्यत्रैव तस्य पर्यवसानम्, तत्त्वतस्तु वाक्यरूपमपि अभिव्यञ्जक ध्वनिवैलक्षण्यविलसितमध्यस्तमेव। परमार्थतस्तु नीरूपः, निर्भागः स्फोटात्मा एकः शब्दः सर्वार्थ- वाचक इत्यवोचाम् ।

## <u>वर्णस्फोटः</u>

<u>वर्णपरिभाषा</u> -

वर्णस्फोट इत्यस्य प्रकृतिप्रत्ययादिरूपाणां पदांशानां वाचकत्वे तात्पर्यम् । वर्ण-शब्देन ह्यत्र सार्थकाः पदांशाः विवक्षिताः न तु प्रत्येकं विशकलिताः ककारा-दयो वर्णाः इत्युक्तं प्राक् । तथाहि पदानां लाघवेन साधुत्वान्वाख्यानार्थम् अर्थ-प्रतिपादनार्थञ्च पदेषु प्रकृतिप्रत्ययादिरूपाः ते ते भागाः तेषां भागानां ते ते अर्थाश्च शास्त्रकारैः (वैयाकरणैः) कल्पिताः ।[4] तद्यथा- पाककर्तृरूपेऽर्थे

---

1- वै०भू०सा०-का- 6।

2- वै०सि०ल०मं०- शक्तिनिरूपणे

3- वाक्यपदीये- 1/24

4- तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययाः तत्तदर्थवाचका इति- वै०सि०ल०मं०-शक्तिनिरूपण, पृ० 7

पाचकपदस्य साधुत्वमन्वाख्यातुं पाचकपदे " पच " इतिप्रकृत्यंशः तस्य च पाकरूपोऽर्थः " ण्वुल् " इति "अक " इति वा प्रत्ययांशः, तस्य कर्तृरूपः अर्थश्चेत्यादिकम् "डुपचष्" पाके " ण्वुल्तृचौ " इत्याद्यनुशासनद्वारेण कल्प्यते स्म आचार्यैः[1]। इदं काल्पनिकमेव वाचकत्वमादाय प्रकृत्याद्यात्मकपदांशरूपाणाम् वर्णानां कृते स्फोट इति व्यपदेशः[2]। स्फोटशब्दस्य हि स्फुटत्यर्थोऽस्मादितिव्युत्पत्त्या वाचक इत्यर्थ इत्युक्तं प्राक् । अत एव पकारचकारादिरूपाणां प्रत्येकं वर्णानां वर्णस्फोटतया न ग्रहणम्, कल्पितवाचकत्वाश्रयणेनापि स्फोटपदीयाया उक्तव्युत्पत्तेः तेषु असंघटनात्। वर्णानां वाचकत्वे दर्शनद्वयम्-

इदमत्र ध्येयम् यदिदं पदांशरूपाणां वर्णानां वाचकत्वम्, तत्र द्वे दर्शने । पदांशाः तेषां वाचकत्वञ्च काल्पनिकमेव, पदान्येव तु सत्यानि[3] पदार्थ एव च सत्यः, पदपदार्थयोरिदं सत्यत्वमपि आपेक्षिकमेव- पदांशतदर्थापेक्षया एवेतियावत् । परमार्थतस्तु वाक्यवाक्यार्थाविव सत्यौ इत्येकं दर्शनम्, दर्शनमिदं शाब्दिकानाम् । पदांशाः तदर्थाश्चैव सत्याः, न पचति इत्यादिरूपेभ्यः प्रकृतिप्रत्ययाद्यात्मकेभ्यः पदांशेभ्यः अतिरिक्तं "पचति " इत्यादिरूपं पदं नाम। नापि तत्तत्पदांशार्थेभ्योतिरिक्तः पदार्थो नाम कश्चित् । पदांशा एव च संभूय पदीभवन्ति पदरूपेण व्यपदिश्यन्ते इतियावत। एवं तत्तत्पदांशार्थाएव संभूय पदार्थ इति व्यपदिश्यन्ते।

1- पा०सू०- 3-1-133
2- वै०सि०ल०म०- शक्तिनिरूपणम्
3- पदान्यसत्यान्येव- वै०सि०ल०म०- स्फोटनिरूपणे- पृ० 380

इयमेव गतिः वाक्यवाक्यार्थविषयेऽपि। पदान्येव हि संभूय वाक्यीभवन्ति, पदार्था एव हि परस्परेणान्विताः वाक्यार्थरूपतां यान्ति, न तु पदेभ्योऽन्यद्वाक्यम्, न वा पदार्थेभ्योऽतिरिक्तो वाक्यार्थः। तदुक्तम्–

न वर्णव्यतिरेकेण पदमन्यत्प्रसिद्ध्यति।

वाक्यं वर्णपदाभ्याञ्च व्यतिरिक्तं न किञ्चन ॥[1]

इत्यपरं दर्शनम्, दर्शनमेतद् नैयायिकादीनाम्।

अस्तु पदांशानां वाचकत्वं काल्पनिकं वा वास्तवं वा, काल्पनिकत्व-वास्तवत्वरूपविशेषानादरेण विचार्यमाणे पुनः तेषां वाचकत्वं सर्ववादिसम्मतमिति वर्णस्फोटो व्यवस्थितः।

वर्णस्फोटविषये स्थान्यादेशविकल्पः –

अत्र विषये द्वे विचारधारे– स्थानिनां वाचकत्वम् आदेशानां वाचकत्वमिति। तथाहि– पचति, रामः इत्यादीनां पदानां लाघवेनान्वाख्यानार्थम् उक्तपदेषु प्रयुज्यमानानां ति– विसर्गादिरूपाणां पदांशानाम् स्थानित्वेन लकारसकारादयः व्याकरणप्रवक्तृभिः पाणिन्यादिभिः कल्पिताः। कल्पनैषा प्रायेण प्रत्ययांशविषये। क्वचित् प्रकृत्यंशविषयेऽपि स्थानिकल्पना दृश्यते। यथा– तिष्ठति, पिबति इत्यादिषु पदेषु प्रयुज्यमानानां तिष्ठ, पिब इत्यादीनां प्रकृत्यंशानां स्थानितया स्था, पा इत्यादयः " पाघ्राध्मा " इत्याद्यनुशासनैः कल्प्यन्ते स्म आचार्यैः। तत्र तत्तदर्थबोधः

---

1– वाक्यपदीये– 1/72

2– पा0 सूत्र– 7/3/78

तत्तत्पदेषु परिनिष्ठितावस्थायां प्रयुज्यमानैः अत एव च श्रूयमाणैः आदेशत्वेन कल्पितैः ति-विसर्गादिरूपैः तिष्ठ, पिब इत्यादिकरूपैश्च पदांशैः एव इति तु निर्विचिकित्सम्। परन्तु पदांशानामेतेषां बोधकत्वं कया रीत्या साक्षात् परम्परया वा इत्यत्रास्ति मतवैभिन्यं भाषामीमांसकानाम् ।

दर्शनान्तरीयमतम्-

------------

नैयायिकादयस्तावद् एवम्विधेषु स्थलेषु लकारसकारादिरूपाणाम् पा-स्थादिरूपाणां वा स्थानिनामेव वाचकत्वमिच्छन्ति। तन्मतानुसारेण लकारादयः स्थानिन एव वाचकाः- तत्तदर्थनिरूपितशक्त्याश्रया इतियावत्- न तु तिब् - विसर्गादिरूपा आदेशाः, तेषां बाहुल्येन शक्तिबाहुल्यप्रसङ्गात् । स्थानिनां वाचकत्वे तु तिबादीनामष्टादशानाम्, तां तमाधादेशानां तु ततोप्यधिकानामा-देशानां मूलस्थानितया एकः लकारः कल्प्यते इति लत्वेन रूपेण एकैव वाचकता (शक्तिः) भवति। आदेशानां वाचकत्वे तु तिप्त्व- तस्त्वादिभिः अष्टादशभिः ततोऽप्यधिकैर्वा रूपैः अनेकाः शक्तयः अभ्युपगन्तव्या इति महद्गौरवम् । "पचति" इत्यायुक्ते श्रूयमाणैः तिबादिभिः बोधस्तु लकारादिरूपस्थानिस्मरणद्वारेण। एवञ्च प्रयुज्यमानाः तिबादिरूपाः आदेशाः नार्थस्य वाचका अपितु वाचकस्य लकारादेः लिपिवत् स्मारकाः। यथा हि लिपिः न अर्थं वक्ति अपितु सा सा लिपिः तं तं शब्दं स्मारयति,अर्थबोधस्तु तेन तेन शब्देनैव। एवम् प्रकृतेऽपि गतिः। लकारादिरूपान् स्थानिनः अविदुषः- अवैयाकरणस्येति यावत्- "पचति" इत्यादितो बोधस्तु शक्तिभ्रमात्।

शाब्दिकमतम्–

शाब्दिकास्तु तिबादिरूपाणामादेशानामेव वाचकत्वमातिष्ठन्ते, तदाह भूषणे दीक्षितः –

"साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः"।[1]

समर्थितश्च सिद्धान्तोऽयं तेन एतदुत्तरवर्तिन्या कारिकया। तद् यथा–

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा।

किञ्चाख्यातेन शत्रादैर्लडिव स्मार्यते यदि।[2]

कथं कर्तृरवाच्यत्ववाच्यत्वे तद्विभावय।[3]

अयमाशयः– व्यवस्थानुरोधात् प्रयुज्यमानाः तिब् – विसर्गादय एव वाचकाः, न तु तत्स्थानित्वेन कल्पिताः लकारसकारादय, यतः आदेशा इव व्याकरणभेदेन स्थानिनोऽपि अनेके। तद् यथा– केनचिदाचार्येण " रामः " इत्यादौ विसर्गस्य स्थानित्वेन " सुः " कल्पितोऽस्ति यथा पाणिनिना, केनचित् सिः , केनचिद् रः। एवम् स्थिते स्थानिनां वाचकत्वे भवति अव्यवस्था गौरवञ्चापि। कः स्थानी वाचकः, सु इति वा, "सि" इति वा, र इति वा इत्यव्यवस्था। विनिगमन-विरहेण सर्वेषां वाचकत्वाभ्युपगमे आदेशानां वाचकत्वपक्षे इव अत्रापि गौरवं समानम्, परं स्थानिस्मरणप्रयुक्तं गौरवमत्रपक्षे अतिरिच्यते। आदेशानां वाचकत्वाभ्युपगमे तु व्याकरणभेदेन स्थानिनां भेदेऽपि विसर्गादय आदेशाः नियतरूपा इति नाव्यवस्था।

---

1– वै०भू०सा०–स्फोटनिर्णयः– का० 61 पृ० 450
2– वै०भू०सा०–का० 62, पृ० 457
3– वै०भू०सा०– 63

शक्तिग्राहकशिरोमणेः व्यवहारादपि च तिबादिरूपाणाम् आदेशानामिव वाचकत्वं सिद्ध्यति। व्यवहारो हि प्रयोगान्तर्गतानां तत्तत्पदेप्रयुज्यमानानां तिबादिरूपाणाम् आदेशानामेव भवति न तु क्वापि लकारादिरूपाणां स्थानिनाम्। अतो व्यवहारविषयाणाम् आदेशानामेव वाचकत्वमभ्युपगन्तव्यं न तु अव्यवहार्याणां स्थानिनाम् । "तद्धेतोरेव तत्त्वे किं तेन " इति न्यायाच्चापि प्रयोगान्तर्गतानामेव वाचकत्वं समायाति,अन्यथा भवति इतिवत् " भू ल् " इत्यतोऽपि बोधापत्तिः। येन शब्देन स्मृतेन बोधः, उक्तेन तु तेन सुतरामेव स्याद् बोधः। तादृशबोधे "भवति" इति समभिव्याहारोऽपिकारणमिति चेत, तत एव किं न बोध इति स्वीक्रियताम्, किमिति आदेशघटितसमभिव्याहारस्य कारणत्वम् स्थानिनो वाचकत्वमिति गौरवग्रस्तः पन्था आश्रियताम् । तस्मात् तथाविधबोधे कारणतया अवश्याभ्युपगन्तव्यस्य भवतीत्यादेः आदेशघटितस्य समभिव्यहारस्यैव अस्तु वाचकत्वमिति प्रयोगान्तर्गतानां तिबादीनां वाचकत्वं न्यायसिद्धम् ।

युक्तश्चायं शाब्दिकपक्षः, यतः पूर्वोक्तनैयायिकादिमते एकस्य स्मारकत्वम् अपरस्य वाचकत्वमिति द्वयी गतिराश्रयणीया भवति,साच गौरवावहा। वस्तुतस्तु परिनिष्ठते तत्तत्पदे प्रयुज्यमानाः, शास्त्रकारैः आदेशतया कल्पिताः तिबादिरूपाः पदांशा एव सत्याः,लकारादिरूपाः स्थानिनस्तु कल्पिताः, रेखागवयवत् प्रतिपत्तिमात्रोपायभूता इति न ते वाचकत्वार्हाः। वाचकत्वं हि बोधकत्वं बोधजनकत्वं शक्त्याश्रयत्वं वा ,तच्च सत्येषु तिबादिरूपेषु आदेशेष्वेव स्यात् प्रभवति न तु काल्पनिकेषु, अत एवासत्येषु स्थानिषु ।

वर्णस्फोटस्य व्याख्यान्तरम् –

प्रकृतिप्रत्ययादिरूपाणां पदांशानां चरमाः वर्णा एव तत्तदर्थवाचकाः। यथा– "पच्" इत्यत्र चकारः " ति " इत्यत्र इकारः पूर्वपूर्ववर्णानुभवजनितसंस्काराश्च चरमेणार्थबोधे हेतवः । अतः न पूर्वेषां वर्णानां वैयर्थ्यम् नापि चरमवर्णमात्रश्रवणाद् बोधप्रसङ्गः इत्येवं रीत्यापि केचन वर्णस्फोटं वर्णयन्ति। एतदनुसारं पदेषु वाक्येष्वपि च चरमवर्णानामेव वाचकत्वं वक्तुं शक्यते इति सर्वत्र वर्णस्फोट एवावतिष्ठते,परन्त्वेतच्छाब्दिकाः न सहन्ते, ते हि सम्पूर्णानामेव प्रकृतिप्रत्ययाद्यंशानां वाचकत्वमातिष्ठन्ते,न तु चरमवर्णानामेव,तच्च वाचकत्वं काल्पनिकमित्यन्यत् । परमार्थस्तु शाब्दिकनये कण्ठताल्वाद्यभिघातजध्वन्यात्मकवर्णसमूहरूपाः प्रकृतिप्रत्ययाद्यंशाः तत्समूहरूपाणि पदानि तादृशपदसमूहरूपाणि वाक्यानि वा न वाचकानि, अपितु तत्तद्वर्णसमूहैः तेन तेन रूपेणाभिव्यज्यमानः एकोऽखण्डः स्फोट एव वाचकः, स च यद्यपि प्रत्येकं वर्णेनापि अभिव्यज्यते तथापि चरमवर्णेनाभिव्यक्त्यतिशयं नीतो भवति बोधहेतुः।

पदस्फोटः

तदेवं प्रकृतिप्रत्ययादिरूपाणाम् पदांशानामुक्तरीत्या काल्पनिके वाचकत्वे अवस्थिते तत्समूहरूपस्यपदस्यापि वाचकत्वमायाति। पदवाच्य एव हि अर्थः प्रकृतिप्रत्ययांशरूपैः वर्णैः खण्डशो व्याख्यायते इति वर्णस्फोट उपजीव्यः पदस्फोटस्तु उपजीवकः । " पदस्फोट " इत्यस्य च पदानां वाचकत्वमित्यर्थः। पदात्मकः स्फोटः, पदञ्चासौ स्फोटः = वाचकः शब्द इति व्युत्पत्तेः । तदुक्तं वैयाकरणभूषणे–

"अथादेशा वाचकाश्चेत् पदस्फोटस्ततः स्फुटः ।"[1] वस्तुतस्तु यादृशेषु पदेषु प्रकृतिप्रत्ययविभागः तत्तदर्थविभागश्चसुज्ञेयः, यथा- पचति, पाचक इत्यादौ तत्र प्रकृतिप्रत्ययांशरूपाणां वर्णानामेव वाचकत्वाश्रयणेन कथञ्चित् उपपत्तावपि एषु पदेषु प्रकृतिप्रत्ययविभागः दुर्ज्ञेयः अशक्यपरिज्ञानो वा तत्र सम्पूर्णस्य पदस्यैव वाचकत्वं वक्तव्यमिति पदस्फोटो न प्रतिक्षेपमर्हति। यथा- घटेन इत्यादौ प्रत्ययेन सह प्रकृतेः एकादेशे कृते कः प्रकृत्यंशः, कः प्रत्ययांश इति भवति दुर्ज्ञेयम्, प्रकृतिप्रत्ययविभागस्य चाज्ञाने तत्तत्पदेन ज्ञायमानस्यार्थस्य अयमंशः प्रकृतिवाच्यः अयञ्चप्रत्ययवाच्य इत्यपि सुतरां दुर्ज्ञेयमिति सम्पूर्णेन पदेनैव घटकर्मत्वादिरूपोऽर्थः प्रतिपत्तव्यः ।

यद्यपि एवं विधेषु पदेषु शब्दसाधुत्वप्रक्रियाविद्भिः वैयाकरणैरितियावत् - "अन्तादिवच्च "[2] इत्याद्यनुशासनबलेन" घट्" इति प्रकृतिः " एन " इति प्रत्ययः अथवा घटे इति प्रकृतिः " न " इति प्रत्ययः इत्येवं प्रकृतिप्रत्ययविवेकः । अत एव च तत्तदर्थविवेकश्चापि शक्यः तथापि बोधो न वैयाकरणानामेव अपित्वन्येषामपि, अन्यैश्च उक्तविभागः दुर्ज्ञेय एव। किञ्च एवम्बिधान्यपि पदानि सन्ति यत्र वैयाकरणैरपि प्रकृतिप्रत्ययांशविवेको न शक्यते कर्तुम् यथा- वः नः । वस्नसादयो हि आदेशाः "युष्मान् " "अस्मान् " इत्यादीनां सविभक्तिकानां पदानां स्थाने अनुशिष्यन्ते।[3] अतः तेषु प्रकृतिप्रत्ययव्यामोहात् अंशैनैरपेक्ष्येणैव तत्तदर्थवाचकत्वं वक्तव्यम् ,अयमेव च पदस्फोट इत्यस्य वास्तवोऽर्थः यत् तत्तदंशनैरपेक्ष्येण सम्पूर्णस्य पदस्य सम्पूर्णार्थवाचकत्वमिति। तदुक्तं वैयाकरणभूषणे-

---------------

1- वै०भू०सा० स्फोटनिर्णय- 64
2- पा०सू०- 6/1/85
3- बहुवचनस्य वस्नसौ-पा०सू० 8/1/21

घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्थिता ।
वस्नतादाविवेहापि सम्भ्रमोहे हि दृश्यते ।।

पदशब्देनात्र पद्यते = गम्यते अर्थो येन इति व्युत्पत्त्या अर्थवाचकः शब्दः पदं, शक्तं पदमित्येवं लौकिकं पदं गृह्यताम्, "सुप्तिङन्तं पदम् ,इतिपारिभाषिकं वा उभयथापि पदस्फोट आवश्यक इत्येतदाशयः ।

## वाक्यस्फोटः

प्रकृतिप्रत्ययांशरूपाणां वर्णानां वाचकत्वे तत्समूहभूतस्य पदस्य इव पदानां वाचकत्वे तत्समूहभूतस्य वाक्यस्यापि वाचकत्वं प्रतिपादितं भवति।

### वाक्यस्वरूपम्-

अथकिमिदं वाक्यन्नाम ? न तावत्पदसमूहम्मात्रं तत्, तथासति हि गौरश्वः पुरूषो हस्ती इत्याद्यात्मकस्य पदसमूहस्यापि वाक्यत्वप्रसङ्ग इति चेत्, अत्र ब्रूमः- आकांक्षादिमत् पदसमूहो वाक्यम्। आकांक्षादिमतां पदानां समूह इति तदर्थः । अत्रापि पदे योग्यतासत्ती ग्राह्ये। यद्यपि आकांक्षा नाम एकपदार्थे ज्ञाते तदन्वययोग्यस्य अपरपदार्थस्य जिज्ञासा,सा च पुरूषनिष्ठा एव न तु अर्थनिष्ठा पदनिष्ठा वा, तथापि अर्थस्य तादृशजिज्ञासाविषयत्वेन आकांक्षावत्त्वं,पदानाञ्च साकांक्षार्थबोधकत्वेन आकांक्षावत्त्वं बोध्यम्। तदुक्तम् न्यायभाष्ये- " पदसमूहो वाक्यमर्थसमाप्तौ" अत्र समर्थमिति शेषो बोध्यः । एतेनापि आकांक्षादिमत्

---

1- वै०भू० सा० स्फोटनिर्णय- 65

2- पा०सू० 1/4/14

3- न्यायसूत्र- 2/1/55

पदसमूहस्यैव वाक्यत्वमुक्तम् । स एव हि ॥ पदसमूहः ॥ अर्थसमाप्तौ भवति समर्थः। अर्थसमाप्तिरित्यनेन निराकांक्षार्थप्रतीतिरूच्यते।

"अर्थैक्यादेकं वाक्यं साकांक्षऽचेद् विभागे स्यात्[1] "

इत्येनेनापि एतदेव वाक्यस्वरूपमभिहितम् । अमरोऽपि एतज्जातीयमेव वाक्यलक्षणमाह-

"सुप्-तिङ्न्तचयो वाक्यं क्रिया वा कारकान्विता[2] "

अत्र वा शब्दश्चेत् अर्थे, क्रिया चेत् कारकान्वितेति। सुप-तिङ्चय इत्यनेन केवलसुबन्तचयः केवलतिङ्न्तचयः सुबन्ततिङन्तोभयचयश्चेति त्रितयमपि संभवति। ततश्च एतदनुसारेण कारकान्वितक्रियाबोधकः केवलसुबन्तसमूहः, तथाविधः केवलतिङ्न्तसमूहः तादृश एव सुबन्ततिङ्न्तोभयसमूहश्च वाक्यमिति व्यपदिश्यते । तत्र केवलसुबन्तसमूहो यथा- देवदत्तेन पक्तव्यम् । केवलतिङ्न्तसमूहो यथा- पचति भवति, "पाको भवति"इत्यर्थे " पचति भवति " इतिवाक्यं प्रयुज्यते। एतच्च " भूवादयो धातवः इति सूत्रे भाष्ये स्पष्टम्[3] । सुबन्ततिङ्न्तोभयसमूहो यथा चैतः पचति "क्रिया चेत् कारिकान्विता" इत्येनन साकांक्षात्वमुक्तम्, सुप्-तिङ्न्तशब्देन च पदमिति आकांक्षादिमत् पदसमूहो वाक्यमित्यत्रैव अस्य पर्यवसानम् | महाभाष्यकारस्तु आख्यातं सविशेषणं वाक्यम्[4] "इत्येवं वाक्यं परिभाषे। अत्राख्यातपदेन क्रियापदमुच्यते, सविशेषणमित्यस्य च साक्षात् परम्परया वा यद्विशेषणम् ॥ अन्वयि ॥

---

1- पू०मी०,अ02,पा01,अ014,सूत्र- 46
2- अमरकोष:- 1/6/2
3- पा0सू0 1-3-1
4- म0भा0 2/1/1

तत्सहितमित्यर्थः । एवञ्च कारकतद्विशेषणक्रियातद्विशेषणघटितः समूहो वाक्यमिति इत आयाति। अत्र परम्परया विशेषणस्यापि ग्रहणात् षष्ठ्यन्तघटितस्य" नद्यास्तिष्ठति कूले "इत्यादेः पदसमूहस्यापि वाक्यत्वं सिद्ध्यति। षष्ठ्यन्तं हि क्रियायां न साक्षाद् विशेषणमपितु कारकद्वारा। एतैश्च सर्वैरपि वाक्यलक्षणैः क्रियाघटितमेव वाक्यं भवति इत्यपि दर्शितम्[1] । तत्र क्वचिल्लक्षणेषु स्फुटमेव क्रियायाः निवेशः, यथा - अमरोक्ते महाभाष्यकारोक्ते च लक्षणे। क्वचित्तु क्रियाघटितत्वमनुक्तमपि योग्यतया अर्थतो वा निवेशितं भवति, यथा- न्यायभाष्योक्ते लक्षणे । तत्र हि "अर्थसमाप्तौ" इति पणः कृतः ,अर्थसमाप्तिश्च क्रियां विना न भवति। कारकस्थानीयानां पदानां साकांक्षत्वमपि क्रियाद्वारैव। नहिं कारकाणां परस्परेणाकांक्षा, अत एव सर्वं वाक्यं क्रियया परिसमाप्यते इत्युद्घोषः शाब्दिकानाम् । एवञ्च यत्रापि केवलं " वृक्ष " इत्युच्यते, क्रियापदं नोच्यते तत्रापि अस्तीति क्रियापदाध्याहारेणैव वृक्षः इत्यादिपदानां वाक्यीभवनम् , स्पष्टञ्चैतल्लघुमञ्जूषायाम्[2] । तदित्थं वाक्यस्वरूपं संग्रहेणाभिहितम्, इदानीं तस्य स्फोटता उच्यते।

वाक्यस्य वाचकता व्यवस्थापनम् -

वाक्यस्फोट इत्यनेन वाक्यस्य वाचकत्वमभिप्रेतम्, तच्च क्वचित् पदविभागसापेक्षम्, यथा- " चैत्रः पचति " इत्यादौ, क्वचिच्च तन्निरपेक्षम् यथा- हरेऽव । पदानामपि वाचकत्वं क्वचित् प्रकृतिप्रत्ययरूपवर्णविभागसापेक्षं यथा- " पाचकः " इत्यादौ, क्वचिच्च तन्निरपेक्षम्, यथा- वस्नसादौ, एवच्च प्रागुक्तम् । यथा "घटेन" इत्यादौ वस्नसादौ वा प्रकृतिप्रत्ययविभागस्य दुर्ज्ञेयत्वात् सम्पूर्णस्य

---

1- अतः शास्त्रप्रक्रियोपयोगिवाक्यलक्षणम् एकतिङ् वाक्यम् इत्युक्तं वार्तिककृता
म० भा०- 2/1/1

2- वै०सि०ल०मं० -शक्तिनिरूपणम् ।

पदस्य तावदर्थवाचकत्वम् । एवम् " हरेव " इत्यादौ पदविभागस्यापि दुर्ज्ञेयत्वेन उक्तसमुदायरूपस्य वाक्यस्यैव तावदर्थवाचकमवसेयम् । तदुक्तं भूषणे–

"हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु"[1] एवञ्च यत्रापि "चैत्रः पचति " इत्यादौ पदविभागः स्पष्टः तत्रापि वाक्यमेव मुख्यं वाचकम् । वाक्यार्थ एव च मुख्यो वाच्यः ,तत्तत्पदानि तेषां ते ते अर्थाश्च वाक्यवाक्यार्थ-प्रत्यायने उपायभूताः। शास्त्रेण पदानामन्वाख्यानं वाक्यान्वाख्यानस्य उपाय एव । एवं पदार्थानां निरूपणमपि वाक्यार्थनिरूपणस्य उपायः न तु पदपदार्था-न्वाख्यानं शास्त्रस्य मुख्यं लक्ष्यम् । अतश्च यथा वर्णस्फोटपदस्फोटयाः उपायोपेय-भावः एवं पदस्फोटवाक्यस्फोटयोरपि उपायोपेयता। अत्र यदिदं वाक्यस्य वाचक-त्वम् तत् परमार्थतः वाक्यात्मना अभिव्यक्तस्य अखण्डस्यैकस्य स्फोटस्यैव वाचकत्व-मिति पूर्वोक्तं न विस्मर्तव्यम् ।

पदस्य वाक्यरूपेणैव वाचकत्वम् –

वस्तुतस्तु पदस्य वाचकत्वमपि वाक्यीभावेनैव। तथाहि अर्थप्रतिपादनार्थ शब्दप्रयोगः, प्रवृत्त्यादिविषय एव च अर्थः प्रतिपिपादयिषितः बुभुत्सितश्च भवति, [वाक्यार्थ एव च भवति प्रवृत्त्यादिविषय एव च अर्थः प्रतिपिपादयिषितः बुभुत्सितश्च भवति]वाक्यार्थ एव च भवति प्रवृत्त्यादिविषयः न तु केवलं पदार्थः । अतः सर्वोऽपि शब्दः, स एकपदात्मको भवतु पदसमूहरूपवाक्यात्मको वा, वाक्यरूपतामासाद्यैव अर्थं प्रतिपादयति। यत्रापि पदमात्रमुच्यते तत्रापि श्रूयमाणं तत्पदं स्वार्थान्वययो-

---

1– वै०भू०सा०– स्फोटनिर्णये का० 66 पृ० 473

ग्यार्थान्तराभिधायकपदयोगेन वाक्यतामासाद्येव अर्थं प्रतिपादयति, न तु स्वार्थमात्र-प्रतिपादने कस्यापिपदस्य पर्यवसानम्। इत्थञ्च प्रत्येकस्मिन् पदे पदान्तरसम्बन्धेन वाक्यीभवनशक्तिः । एवं स्थिते यद्यपि घटमित्यादिपदमात्रप्रयोगेऽपि " घटं पश्य " इत्यादिवाक्यार्थबोधः शक्यः, कारकमात्रप्रयोगे आकांक्षिततत्तत्क्रियान्वितकारक-रूपवाक्यार्थबोधः, क्रियामात्रप्रयोगे च आकांक्षिततत्तत्कारकान्वितं क्रियारूपवाक्यार्थ-बोधश्च शक्य इति यावत् तथापि कारकमात्रप्रयोगे योग्यसकलतत्तत्क्रियापदाध्याहारे प्रसक्ते एवम् क्रियापदमात्रप्रयोगे योग्यसकलतत्तत्कारकपदाध्याहारे प्रसक्ते नियमार्थः तत्तत्क्रियाकारकवाचकानां वाक्यघटकानां तत्तत्पदानां प्रयोगः । यथा "पश्य" इतिक्रियापदस्ययोगेनैव घटमित्येतस्य पदस्य वाक्यीभावः वक्तुरभीष्टः न तु "आनय" इत्यस्य पदस्य योगेनेति " पश्य " पदप्रयोगेण नियम्यते। एवं घटमित्यस्य पदस्य योगेनैव प्रकृते पश्य पदस्य वाक्यीभावः न तु पटमित्यस्य पदस्य योगेन इति घटमितिपदप्रयोगेण नियम्यते। वाक्यार्थबोधस्तु घटमित्यनेन " पश्य " इत्यनेन वा पदमात्रेणापि उक्तरीत्या शक्य एव। ध्वनितंचैतदर्थवत्सूत्रे भाष्ये[1] । तत्र हि एवमाह भाष्यकारः – " इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः कर्मक्रियागुणौ च अनिर्दिष्टौ, गामित्युक्ते कर्मनिर्दिष्टं कर्तृन्क्रियागुणौ चानिर्दिष्टौ," अभ्याज" इत्युक्ते क्रियानि-र्दिष्टा कर्तृकर्मणी–गुणश्चानिर्दिष्टः। इहेदानीम् " देवदत्तः गामभ्याज शुक्लाम् । इत्युक्ते सर्वं निर्दिष्टम् । देवदत्त एव कर्ता नान्यः, गामेव कर्म नान्यत्। अभ्याज एव क्रिया नान्या। शुक्लामेव न कृष्णामिति। " स्पष्टमेतत् सर्वम् लघुमञ्जूषायाम्[2] ।

---------------

1– पा०सू०– 1/2/45

2– वै०सि०ल०मं०– स्फोटनिरूपणम्, पृ० 380

इत्थञ्च सर्वोऽपि प्रतिपादकः शब्दः वाक्यात्मक एव। अर्थश्च वाक्यार्थात्मक एव इतिस्थितम्।

पदार्थेभ्यः पृथक् वाक्यार्थस्य व्यवस्थापनम् -

ननु वाक्यवाक्यार्थान्वाख्यानार्थं पदपदार्थकल्पनायां पदार्थेभ्यो व्यतिरिक्तः को नाम वाक्यार्थः यः वाक्यशक्तेः विषयः ? इति चेत् उच्यते- पदार्थानामन्यो न्यव्यावर्तनात्मा विशेष्यविशेषणभाव एव वाक्यार्थः । यथा - " नीलमुत्पलम् इत्यत्र नीलपदार्थो नीलगुणः रूपान्तरविशिष्टम् उत्पलं व्यावर्तयति। उत्पलपदार्थः उत्पलद्रव्यम्, द्रव्यान्तर्गतं नीलगुणं व्यावर्तयति इति। नीलपदार्थोत्पलपदार्थयोः अन्योन्यव्यावर्तकता, अयमेव च विशेष्यविशेषणभावः, एष एव च वाक्यशक्तेः विषयः। नहि अयं विशेष्यविशेषणभावः नीलमित्यादितत्तत्पदीयशक्तेः विषयः शक्यते वक्तुम् एकपदमात्रप्रयोगे तस्यानवगमात्, अपितु नीलमुत्पलमित्याद्याकारकपदसमभिहाररूप- वाक्यशक्तेःएव विषयः ।तदेवं पदार्थेभ्यो व्यतिरिच्यमानः तेषां परस्परसंसर्गात्मा विशेष्य-विशेषणभाव एव वाक्यार्थ इत्यवधेयम् । स्पष्टञ्चैतत्प्रातिपदिकार्थ इति- सूत्रे महाभाष्ये तत्रहि "वीरः पुरुषः " इत्यादौ विशेष्यविशेषणभावरूपम् यदाधिक्यं सः वाक्यार्थ इत्युक्तम् ।[1]

ननु पदार्थसंसर्गरूपः अन्वयोऽपि किं न पदशक्तेरेव विषयः स्वीक्रियताम् ? किमिति तत्र वाक्यशक्तिरभ्युपगम्यते। सर्वं पदं यत्किञ्चिदन्वितमेव पदार्थं बोध- यति इति अन्विताभिधानवाद एव किं न प्रतिष्ठाप्यतामिति चेत्, नैवं शक्यम् ।

---

1- महाभाष्यम् (पा०सू० 2/3/46, 2/3/50, मंजूषा- 40)

अन्विताभिधानवादेऽपि पदशक्त्या कथञ्चित् सामान्यरूपेणान्वयबोधेऽपि तत्तद्विशेषरूपेणान्वयबोधार्थं तत्तत्पदसमभिहाररूपस्य वाक्यस्य कारणता अनिवार्या एव। एवं स्थिते वाक्ये विशेषरूपेण अन्वयबोधजनकतायाः अवश्याभ्युपगन्तव्यत्वे सम्मायातं वाक्यशक्त्या, या हि इयं वाक्ये विशेष्यरूपेण अन्वयबोधजनकता सैव वाक्यशक्तिः 'शब्दनिष्ठा बोधजनकता एवं हि शाब्दिकनये शक्तिः ।

अथ पदैः पदार्थोपस्थितौ आकांक्षादिभिः हेतुभिः तेषां पदार्थानां परस्परसंसर्गात्मक अन्वयः प्रतीयते इत्येवं नैयायिकादिरीत्या वाक्यशक्तेः निराकरणमपि न विचारसहम् । तथासति हि संसर्गांशस्य शब्दशक्त्यविषयत्वेन शाब्दबोधविषयता न स्यात्, स एव हि अर्थः शाब्दबोधस्य शब्दजप्रतीतेरितियावत्- विषयः यः शब्दशक्तेः विषयः । अपि च संसर्गस्य आकांक्षागम्यत्वेन आकांक्षायाः पदसमभिव्यहाररूपतया पदसमभिव्याहार-रूपस्यवाक्यरूप संसर्गबोधकारणता अभ्युपगतैव भवति । सैव च शाब्दिकनये शक्तिरित्युक्तम् । तदित्थं पदार्थानां परस्परसंसर्गात्मकः परस्परविशेष्यविशेषणभावात्मको वा वाक्यार्थः वाक्यशक्तेः विषयः इतिस्थितम्। आकांक्षातु अस्याः वाक्यशक्तेरेव ग्राहिका। इत्थञ्च आकांक्षा न साक्षात् संसर्गरूपं वाक्यार्थं प्रतिपादयति अपितु वाक्यशक्तिग्रहद्वारेण तद्ग्रहे उपयुज्यते। तदुक्तम् मञ्जूषायाम् =

"वाक्यसमयग्राहिका चाकांक्षा "[1] ।

----------------

1- वै०सि०ल०म० आकांक्षानिरूपणम्-पृ० 495

वाक्यशक्तिग्रहविमर्शः -

अत्र संसर्गरूपे वाक्यार्थे वाक्यशक्तेः अभ्युपगमे अश्रुतपूर्वाद् वाक्याद् वाक्यार्थबोधो नोपपद्यते। तत्र हि तद्वाक्यार्थस्य पूर्वं कदापि अगृहीतत्वेन तत्र तद्वाक्यस्य शक्तिरपि अगृहीता भवति। अगृहीता च शक्तिः बोधे नोपयुज्यते, तथासति अगृहीतशक्तिकात् पदादपि बोधप्रसङ्ग इति पर्यनुयोगस्तु न युज्यते, यतः अन्विताभिधानवादेऽपि सामान्येन अन्वयविशिष्टे तत्तत्पदस्य शक्तेः ग्रहेऽपि अन्वयविशेष पदशक्तिः अगृहीतैव भवति।

"सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्"[1]

इति सिद्धान्तानुसारेण वाक्यार्थस्य लक्ष्यत्ववादेऽपि वाक्यार्थस्य अपूर्वत्वेन प्रागनुपस्थितस्यैव वाक्यार्थस्य लक्षणया बोधो भवति वक्तव्यः। एवञ्च यथा अन्विताभिधानवादे अन्वयविशेषांशे अगृहीता एव पदशक्तिः बोधे उपयुज्यते, यथा च वाक्यस्य लक्ष्यत्ववादे वाक्यार्थस्य प्रागनुपस्थितत्वेन तत्रागृहीता एव लक्षणा वाक्यार्थबोधे प्रयोजयति, एवं वाक्यशक्तिवादेऽपि पदार्थोपस्थितौ तत्तद्वाक्यार्थे अगृहीतापि तत्तद्वाक्यशक्तिः बोधं प्रयोजयति इति शक्यते वक्तुम्। तदुक्तं भूषणे-

" अर्थे विशिष्यसम्बन्धाग्रहणं चेत् समं पदे[2]।
लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत् तथा।
सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।
भाट्टास्तैऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम्[3]।।

1- वै0भू0सा0-पृ0488
2- वै0भू0सा0स्फोटनिर्णय- 66 पृ0 473
3- वै0भू0सा0-67 पृ0 488

वस्तुतस्तु वाक्यार्थबोधसमकालमेव आकांक्षादिना तत्तद्वाक्यार्थे तत्तद्-वाक्यशक्तेःग्रहः इतिध्येयम् ।

त्रयो जातिस्फोटाः -

ध्वन्यात्मका एव वर्णाः,तेषां समूहः पदं,पदानाञ्च समूहो वाक्यमिति-दर्शने तत्तद्वर्णगताः तत्तत्पदगताः तत्तद्वाक्यगताश्च जातय एव तत्तदर्थानां वाचिकाः न तु तत्तद्वर्णव्यक्तयः पदव्यक्तयो वाक्यव्यक्तयो वा, तासां व्यक्तीनामानन्त्येन शक्तीनामपि आनन्त्यप्रसङ्गात्। तद्यथा-घकाराकारटकाराकाराणां समूहरूपा पदव्यक्तिः न घटार्थस्य वाचिका, यतः ध्वन्यात्मकानां शब्दानां प्रत्युच्चारणभेदात उच्चारणभेदेन अनेकाः घटपदव्यक्तयो भवन्ति। तासु सर्वासु घटाद्यर्थ-निरूपिताः अनेकाः शक्तयःस्वीकार्या इतिगौरवम् । अतः इदं घटपदम्, इदं घटपदम् इत्याद्यनुगतप्रतीतिनिबन्धनभूता सकलघटपदव्यक्तिनिष्ठा तत्तदानुपूर्वीव्यङ्ग्या घटपदत्वरूपा जातिरेव वाचिका, तस्याश्च एकत्वात् शक्तिरपि एका एव भवतीति न गौरवम् । एवमेव सर्वत्र अनुगतविभिन्नतत्तद्वर्णपदवाक्यव्यक्तिनिष्ठाः जातय एव तत्तदर्थानां वाचिकाः । अतः ताः जातय एव स्फोटपदवाच्याः । जातिरेव स्फोटः वाचकः इति जातिस्फोट इत्यस्यार्थः । तदुक्तं वाक्यपदीये-

"अनेकव्यक्त्यभिव्यङ्ग्या जातिस्फोट इति स्मृतः "[1]

यथा गवादिपदानां गवादिव्यक्तिषु शक्त्यङ्गीकारे शक्तीनामानन्त्यम्, गृहीत-शक्तिकस्यैव अर्थस्य शब्देन बोधः इतिनियमे व्यभिचारश्चेतिदोषद्वयं भवति। अतः व्यक्तिशक्तिवादं परित्यज्य अर्थगतासु जातिषु एव शब्दानां शक्तिः स्वीक्रियते ।

1- वाक्यपदीये 1/93

गोत्वादयो जातय एव गवादिपदानां शक्याः न तु गवादयो व्यक्तयः इति । एवं तत्तद्वर्णपदवाक्यगतासु जातिष्वेव तत्तदर्थनिरूपिताः शक्तयः । पदजातय एव शक्ताः न तु पदव्यक्तय,इति हि जातिस्फोटवादिनां दर्शनम्। तदुक्तं भूषणे –

" शक्यत्वे इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्[1]"

तदेवं वर्णपदवाक्यरूपाणां शब्दव्यक्तीनां वाचकत्ववादे यथा त्रयो व्यक्तिस्फोटाः ये प्राक् प्रदर्शिता, एवं तत्तद्वर्णपदवाक्यगतानाम् तत्तद्वर्णपदवाक्यव्यङ्ग्यानां वा जातीनां वाचकत्वाश्रयणे वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजाति स्फोटश्चेति त्रयो जातिस्फोटाः अवतिष्ठन्ते।

आनुपूर्वीभेदेन जातिभेदः –

ननु अस्मिन् जातिस्फोटवादे " सरो रसः" इत्यादौ बोधे अविशेषप्रसङ्गः, यतः यावतां वर्णानां समूहः "सरः " इति तावतामेव वर्णानां " रसः " इतिसमुदायः । एवञ्च " सरो रसः" इत्यनयोः समुदाययोः जात्यैक्यं वक्तव्यम् । या जातिः "सर"इतिवर्णैः अभिव्यज्यते सैव " रस "इति वर्णैः। ततश्च सैव जातिः सरोरूपार्थनिरूपितशक्तिमती सैव च रसरूपार्थनिरूपितशक्तिमती इत्यायाति । एवं स्थिते उभयत्र उभयबोध आपपतीति बोधे वैलक्षण्यं नोपपद्यते इति चेत्, अयमत्र समाधिः-अन्या जातिः "सर " इतिसमुदाये अन्या च " रस " इतिसमुदाये,न तु जात्यैक्यम् येन बोधे स्याद्वैलक्षण्यप्रसङ्गः । अत एव सर्वेषु रसपदेषु इदं रसपदमिति प्रतीतिवत् " सर" इति पदे रसपदमिति प्रतीतिः न भवति। आनुपूर्वीभेदात् तथा प्रतीत्यभाव इति चेत, तत एव जातिभेदोऽपि शक्यते वक्तुम्। आश्रयभूतानां

---

1– वै0भू0सा0 स्फोटनिर्णयः –71 पृ0 52।

व्यञ्जकानां वा वर्णानां तुल्यत्वेन जात्यैक्यस्वीकारेऽपि न दोषः । वस्तुतो जाते-रैक्येऽपि व्यञ्जकानुपूर्वीरूपोपाधिभेदात् भेदमादाय " सरो रसः "इत्यादौ बोधे वैलक्षण्यं शक्योपपादनम् । सैव जातिः यदा " सरः " इत्यानुपूर्व्या अभिव्यज्यते तदा एकमर्थं वक्ति यदा तु " रस " इति आनुपूर्व्या अभिव्यज्यते तदा अपरमर्थम् । उभयार्थनिरूपिते उभे अपि शक्ती तस्यामेकस्यामेव जातौ, परन्तु आनुपूर्वीविशेषः शक्तिविशेषस्य व्यञ्जकः । अस्ति च " सरो रस " इत्यत्र जात्यभेदेऽपि आनुपूर्वी-भेदः । तदुक्तम् भूषणे-

" औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् "[1]

जातिस्फोटसमीक्षा-

इदमत्रध्येयम् यथा शाब्दिकनये वर्णपदवाक्यव्यक्तीनां वाचकत्वं काल्पनिकं व्यावहारिकं वा, एवमेव तत्तज्जातीनामपि । जातेः वाचकत्वस्य या दृढता सा आपेक्षिकी एव, व्यक्तिवाचकत्वापेक्षया इतियावत्- न तु पारमार्थिकी । परमार्थस्तु सकलतत्तद्वर्णपदवाक्यादिरूपैः अभिव्यक्तः एकोऽखण्डः नित्यो विभुश्च स्फोटात्मा शब्द एव वाचकः न तु विभिन्नविधतत्तद्वर्णपदादिनिष्ठाः विभिन्नाः जातयः । वस्तुतस्तु शाब्दिकमान्यतानुसारेण जातेः व्याख्याने वैयाकरणसिद्धान्तसिद्धः अखण्डै-कस्फोटवादो जातिस्फोटवादान्न भिद्यते । यथाहि अद्वैतिनामेव अद्वैतसिद्धान्ता-नुयायिनां शाब्दिकानां मतेऽपि तत्तद्द्रव्यत्वावच्छिन्नं ब्रह्मैव जातिः तदुक्तं कैयटेन "असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः इति । ब्रह्मतत्त्वमेव शब्द-स्वरूपतया भाति इति च ।[2] सा च जातिः वस्तुतः एका एव व्यक्तिरूपोपाधि-

1- वै०भू०सा०-स्फोटनिर्णयः - 71
2- वै०भू०सा० पृ० 527

भेदाच्च तद्भेदः। ब्रह्म च शब्दतत्त्वात्मकम्, यदाह हरिः-

"अनादिनिधनं ब्रह्म शब्दतत्त्वयंदक्षरम् ।

विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।

तदेवं तत्तद्वर्णपदवाक्यव्यक्तिभिः तत्तद्रूपेण अभिव्यज्यमानं ब्रह्मात्मकं शब्दतत्त्वमेव तत्तत्पदादिगताः जातयः, तदेव च सर्वार्थवाचकमिति शब्दब्रह्मरूपाणां जातीनाम् समायाता स्फोटरूपता ।

अखण्डपदवाक्यस्फोटौ-

प्रकृतिप्रत्ययांशरूपाणां वर्णानामर्थाः संभूय पदार्थतां पदार्थाश्च परस्पर-संसर्गविशिष्टाः सन्तो वाक्यार्थतां यान्ति। एवं ते वर्णाः पूर्वापरीभावेन अवस्थिताः पदरूपतां पदानिच संभूय वाक्यरूपतामासादयन्ति इतिदर्शनानुसारेण एतावत्पर्यन्तं वर्णपदवाक्यस्फोटाः व्याख्याताः। यधप्यस्मिन् दर्शने पदानां समूह एव वाक्यम् तथापि प्रत्येकं पदेषु असती अपि विशेष्यविशेषणभावरूपवाक्यार्थनिरूपिता शक्तिः तत्समूहरूपे वाक्ये न विरूद्धयते। प्रत्येकं समूहिषु असदपि कार्यविशेषकारणसामर्थ्यम् समूहे दृश्यते। तद्यथा प्रत्येकं तन्तुषु असदपि प्रावरणसामर्थ्यं तत्समूहरूपे पटे। पदवाक्ययोरखण्डत्वे वाक्यपदीयसम्मतिः-

इदानीं शाब्दिकसिद्धान्तसिद्धः अखण्डस्फोटपक्षः उप स्थाप्यते। तथाहि शाब्दिकाचार्येण भर्तृहरिणा-

" पदे न वर्णा विधन्ते वर्णेष्वयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ।।[2]

1- वाक्यपदीयम्- 1/1

2- वाक्यपदीये- 1/73
वै०भू०सा०-68

इत्येवं वाक्यपदीये एतद्विषये स्वराद्दान्तः प्रतिपादितः। यथा- ऋकार-ऐकार उकारादिषु वर्णेषु प्रतीयमाना अपि रेफ- आकार-इकारादिसदृशा अवयवा वस्तुतो न सन्ति, अखण्डा एव ते वर्णाः न तु वर्णसमूहरूपाः।[1] एवं पदे वर्णाः न विद्यन्ते, न वर्णसमूहः पदमित्यखण्डमेव । एवमेव न पृथक् पृथगवस्थितानि पदानि संभूय वाक्यरूपतां यान्ति, अपितु स्वतन्त्र एव‌ अतिरिक्त एव‌ वाक्याकारः पदाकारेभ्य इति एतत्कारिकार्थः । अत्र " वर्णेष्ववयवा न च " इत्यंशो दृष्टान्तः । " पदे न वर्णा" इतिण्वाक्यात् पदानाम् इति च दार्ष्टान्तिकम्, अत एव क्वचित् " वर्णेष्ववयवा इव" इत्यापि पाठभेदो लभ्यते।

पदवाक्ययोः वर्णपदावभासे बीजम् -

यदि पदे वर्णाः न विद्यन्ते,वाक्ये च पदानि न विद्यन्ते तर्हि पदे वर्णावभासः वाक्ये च तत्तत्पदावभासः कथमिति चेत्,इत्थम्- तथाहि वर्णव्यञ्जकाः पदव्यञ्जकाः वाक्यव्यञ्जकाश्च ध्वनयः भिन्नाः,भिन्ना एव परन्तु अंशतस्सजातीयाः । पदव्यञ्जकेषु स्वतन्त्रवर्णव्यञ्जकध्वनिसजातीयाः ध्वनयः समाविष्टाः। एवम् वाक्यव्यञ्जकेषु ध्वनिषु स्वतन्त्रपदव्यञ्जकध्वनिसजातीयाः ध्वनयः,यथा ऐकारादिवर्णव्यञ्जकेषु ध्वनिषु स्वतन्त्राकारादिव्यञ्जकध्वनिसजातीयानाम् ध्वनीनां समावेशो लभ्यते। ततश्च ऐकारादिषु अकारादिवर्णावभासवत् व्यञ्जकध्वनिसाजात्यात् वायुसंयोगसाजात्याद्वा पदेषु वस्तुतो सतामपि वर्णानां वाक्येषु च पदानामवभासः । नैतावता वर्णसमुदायः पदम् पदसमुदायो वा वाक्यम्। तदुक्तम् वाक्यपदीये-

" प्रत्येकं व्यञ्जकाः भिन्नाः वर्णवाक्यपदेषु ये ।
तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ।।

---

1- वाक्यपदीये- 1/88

पदपदार्थादीनां काल्पनिकत्वम् –

तदयं निष्कर्षः– वाक्यं पदञ्चाखण्डमेव, वाक्ये पदानि पदे च प्रकृति-प्रत्ययादिरूपाः अंशाः काल्पनिका एव[1]। अखण्डमेव वाक्यम् अखण्डार्थं बोधयति। वाक्ये पदानि वाक्यार्थे पदार्थाश्च अखण्डयोरेव वाक्यवाक्यार्थयोः बोधने उपायतया शास्त्रकृद्भिः कल्प्यन्ते स्म। अस्माकमपि यः पदपदार्थज्ञानपूर्वको वाक्यवाक्यार्थानुभवस्तत्रापि वस्तुतः अखण्डेनैव वाक्येन अखण्ड एवार्थः बोध्यते। पदपदार्थज्ञानन्तु रेखागवयवत् उपायभूतमेव। यथा रेखागवयं दृष्ट्वा वास्तवस्य गवयस्य ज्ञानं भवति तत्र रेखागवये आलिख्यमानाः श्रृङ्गलाङ्गुलावयवा असत्या एव, परन्तु तैः वास्तवो गवयः परिचाय्यते। एवं प्रकृतेऽपि असत्यैः एव पदपदार्थैः वाक्यवाक्यार्थयोरवगमः। एवमेव स्थितिः पदपदार्थविपेक्ष्य प्रकृतिप्रत्ययरूपवर्णतदर्थयोः। एवञ्च पदपदार्थयोः या वास्तवता प्रागुक्ता सा वर्णवर्णार्थावपेक्ष्यैव। वाक्यवाक्यार्थापेक्षया तु पद-पदार्थावपि अवास्तवौ एव। पदेषु इदं पदं रूढम्, इदं यौगिकम्, इदं योगरूढमित्याद्यपि शास्त्रकृत्कल्पनैवा एव विशिष्टार्थ-बोधार्थं। बुद्धे च तत्र प्रयोजनसम्पत्तेरुपाय परित्याग अत एव व्याकरणभेदेन उपायाअनियताः[2]। तदुक्तम् –

"उपादायापि ये हेयास्तानुपायान् प्रचक्षते।
उपायानाञ्च नियमो नावश्यमवतिष्ठते॥[3]

---

1– वस्तुतो सर्वं वाक्यमखण्डमेव। पदान्यसत्यान्येव।
वै०सि०ल०म०– स्फोटनिरूपणम्।
2– वै०सि०ल०म०– स्फोटनिरूपणे-पृ० 38।
3– वाक्यपदीये– 2/38

पदपदार्थनिबन्धनाः तत्तद्वेदवाक्यार्थ निर्णयविषयकाः सर्वेऽपि " श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां पारदौर्बल्यमित्यादिकाः[1] मीमांसान्यायाः काल्पनिकानेव पदपदार्थानाश्रित्य प्रवर्तन्ते। अतो न वाक्यवाक्यार्थयोरखण्डत्वेऽपि पदपदार्थनिबन्धनानां मीमांसान्यायानाम् उच्छेदप्रसंङ्गः । स्पष्टमेतद्मञ्जूषायाम् ।
तद्यथा-

"अखण्डादेव वाक्यात्तदर्थाच्च कल्पनया शास्त्रे पदपदार्थापोद्धारेण तमादाय सकलेष्टसिद्धेः, एवञ्च कल्पितपदपदार्थाश्रयैः मीमांसान्यायैः तादृशाखण्डार्थबोधनम् ।"[2]
प्रकृतिप्रत्ययादीनां काल्पनिकत्वे पञ्चकोषदृष्टान्तः-

---

एवञ्च यथा वेदान्ते वास्तवस्य विशुद्धस्य ब्रह्मतत्त्वस्य प्रतिपत्त्यर्थम् अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्याः पञ्चकोषाः[3] अवास्तवब्रह्मतया उपदिष्टा भृगुवल्याम् आनन्दवल्याञ्च, तैश्च वस्तुतो ब्रह्मभूतैरपि उत्तरोत्तरमन्तरङ्गतां गतैः वास्तवस्य विशुद्धस्य ब्रह्मणः प्रतिपत्तिः ,तद्वत् इहापि अवास्तवैः प्रकृतिप्रत्ययतदर्थैः वर्णवणार्थैरितियावत- पदपदार्थैश्च वास्तवम् अखण्ड-वाक्यस्फोटम् अनुमिन्वन्ति स्म आचार्याः। तदुक्तं भूषणे-

" पञ्चकोषादिवत्तस्मात् कल्पनैषा समाश्रिता।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।।[4]

अखण्डवाक्यस्फोटात्मकस्य तदर्थात्मकस्य च उपेयस्य प्रतिपत्त्यर्था एषा पदपदार्थादिकल्पना पञ्चकोषादिवत् शास्त्रकारैः समाश्रिता इत्येतदर्थः ।

---

1- श्रुतिलिङ्ग-प्रकरणस्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात- मीमांसा०द03/3/14
2- वै०सि०म०-स्फोटनिरूपणे- पृ0 384
3- तैत्तरीयोपनिषद्गता अनुवाकसमूहात्मिकका भृगुप्रश्नाश्रिता भृगवल्ली। तत्र वरूणपुत्रो भृगुः स्वपितरं वरूणं ब्रह्म पृष्टवान् । वरूणश्च तस्मै "अन्नं प्राणं चक्षुः श्रोतं मनो वाचमिति ब्रह्मोपलब्धौ द्वाराण्युक्तवान्" वै०भू०सा०प्रभाटीकायाम्-पृ0 506
4- वैयाकरणभूषणसारे-69

षोडश स्फोटकल्पना

व्याकरणदर्शनभूमिकायां श्रीमद्भिः रामाज्ञापाण्डेयैस्तु षोडश स्फोटाः प्रदर्शिताः। तथाहि व्यक्तिः पदार्थ इति व्याडिमते व्यक्तिस्फोटः। जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोट इत्येवं रूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि च अवान्तरस्फोटप्रतिपादने आग्रहः तर्हि कल्पितानि पदानि, कल्पितपदेषु कल्पितप्रकृति-प्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः। एवं सति 1- प्रकृतिस्फोटः 2- प्रत्ययस्फोटः 3- प्रकृतिजातिस्फोटः 4- प्रत्ययजातिस्फोटः 5- पदस्फोटः 6- पदजातिस्फोटः 7- वाक्यस्फोटः 8- वाक्यजातिस्फोटः 9- अखण्डपदस्फोटः 10- अखण्डपदजातिस्फोटः 11- अखण्डवाक्यस्फोट 12- अखण्डवाक्यजातिस्फोटः इति द्वादश स्फोटाः भविष्यन्ति। तत्तदवयव-विवक्षाविवक्षाभेदेन प्रकृतिप्रत्ययादि-कल्पनाकल्पनाभ्यां सर्वेषां कृते द्वादशस्फोटाः युक्तियुक्ताः भवेयुः। एतदेव विचार्य-मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयत्।

यच्च भट्टनागेशो लघु मञ्जूषायाम् - " तत्र प्रकृतिप्रत्ययनिपातानामेकवर्णाना-मर्थवत्त्वदर्शनात् " इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्ययोर्वाचकत्वमित्येवं रूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः" इत्यापवोचत्, तद् वक्ष्यमाण-भाष्यविरोधाद् हेयमेव।

वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते। प्रत्याहाराह्निके "एऔच" सूत्रोपरि "अथवोभयतः स्फोटमात्रं निर्दिश्यते, इति भाष्योक्त्या शुद्धेषु अकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटा-वाधिकौ तत्र सन्निवेश्याविति चतुर्दशस्फोटाः सम्पन्नाः। प्रकृतिप्रत्ययविशयेऽप्यखण्ड-सखण्डभेदेन द्वयोरपरयोरपि सम्मेलने षोडशस्फोटाः सम्पद्यन्ते।

एते सर्वेऽपि स्फोटाः नित्याकाशसदृशनित्यस्फोटमूलकवर्णपदवाक्यकल्पनया कल्पिता एव मन्तव्याः। स्फोटं विहाय पदवाक्यकल्पनायाः खपुष्पायमाणत्वात्[1]।

द्वात्रिंशत् संख्याकाःस्फोटाः-

" वस्तुतः भेदानां विमर्शे क्रियमाणे द्वात्रिंशत्संख्याकाः प्रतीयन्ते। तथाहि प्रकृतिप्रत्ययस्फोटौ एकवर्णरूपौ द्विविधौ, अनेकवर्णघटितसमुदायरूपौ च द्विविधौ। एतौ पुनः सखण्डाखण्डभेदाभ्यां द्विविधाविति चतुर्विधौ। इत्थं व्यक्तिपक्षे मिलिताः सर्वे षड्विधाः जाताः । जातिपक्षे पुनश्चत्वार एव। पदवाक्यस्फोटौ च व्यक्तिपक्षे चतुर्विधौ, जातिपक्षे च द्विविधौ। एवञ्च व्यक्तिपक्षे संकलनया दशसंख्याकाः इमे सम्पन्नाः जातिपक्षे तु षट्संकलिताः षोडश। आन्तरबाह्यभेदाभ्यां पुनर्भेदः द्वात्रिंशत् संख्याकाः ज्ञातव्याः सूक्ष्मदर्शिभिः शब्दशास्त्रनिष्णातैः । लघुमञ्जूषायां यद्यप्यान्तरस्यैव सत्ता सूचिता तथापि घटादिरूपबाह्यपदार्थवत् अस्यापि सा सत्ता स्वीकार्या एव औपचारिकी एव सास्तु इत्यन्यत्[2]। एवञ्च भूषणग्रन्थे अष्टौ स्फोटा इति कथनम्, व्याकरणदर्शनभूमिकायां षोडश स्फोटा इति कथनञ्च न संख्यावधारणपरम् अपितु उपलक्षणपरमिति विभाव्यतां सुधीभिः । सूत्रकृता भगवता पाणिनिनापि "जात्याख्यायाम् सरूपाणाम्, इत्यादिसूत्रेषु जातिव्यक्ति पक्षौ सूचितौ पदार्थमात्रविषये। एवं सखण्डाखण्डपक्षावपि शास्त्रे बहुत्र निर्दिष्टौ स्तः ।

---

1- व्याकरणदर्शन-भूमिका, शब्दनिरूपणाध्यायः पृ0 24

2- पाणिनीयव्याकरणेप्रमाणसमीक्षा- शब्दसमीक्षायां चतुर्थपुष्पम् ।

## स्फोटभेदे प्रमाणम् –

यद्यपि अयं स्फोट एको नित्यो विभुश्च तथापि शास्त्रीयप्रक्रियानिर्वाहाय कल्पितेषु प्रकृतिप्रत्ययेषु अर्था अपि कल्पिता एव सन्ति । कल्पनायामस्यां,"भूवादयो धातवः," इति सूत्रं भवति प्रमाणम्। एवञ्च कल्पिततत्तदर्थवाचका प्रकृतिप्रत्यया एव वर्णस्फोटपदेनैव संकेतिता भवन्ति। अन्यथा धातुरूपायां प्रकृतौ अर्थवाचकत्वाभावे "क्रियावाचिनो भ्वादय " इत्युक्तो संगतिव्यवस्थापनमसंभवं भवेत् । तथा च अस्मिन्नेव सूत्रे भाष्यकृताशङ्कित,"भाववचनो धातुरिति लक्षणे " सति प्रत्यये भाववचनत्वं भाववचनाच्च प्रत्ययः,इत्येवमन्योन्याश्रयदोषोऽपि कथं संगच्छेत[1]।

"सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः "

इति पतञ्जलिवचनेन "येनोच्चारितेन " इत्यादिभाष्यप्रतीकमादाय "वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति " इति प्रदीपकारोक्त्या च पदवाक्यस्फोटौ स्फुटं प्रतिपादितौ भवतः[2]। यद्यपि "वर्णव्यतिरिक्तस्य" इत्यनेन पदवाक्ययोरखण्डत्वमेव प्रतिपाद्यते तथापि "नित्येषु नामशब्देषु कूटस्थैरविचालिभिः वर्णैः[3] भवितव्यम् इति भाष्यवचनेन तयोः सखण्डत्वमपि प्रतीयते एव। जातिव्यक्तिभेदेन पुनरपि इमे भिन्नाः प्रतीयन्ते। अत एव "अइउण् " इति सूत्रस्यभाष्यप्रदीपे जातिव्यक्तिस्फोटयोर्बलाबलचिन्तनम् ,अक्षरं न क्षरं विद्यात् ,इति भाष्यग्रन्थव्याख्याने

---

1– पा०सू०– 1/3/1
2– व्या०म०–भा०–पस्पशाह्निकम्
3– व्या०म०भा०–1/1/55
4– म०भा०– 1/1 मा०सू०–1

तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम्, व्यवहार नित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा इति प्रतिपादनञ्च[1] श्रीकैयटकृतं संगतं भवति।

एवमेव "अर्थवत्[2] सूत्रे, "स्वं रूपमिति[3] सूत्रे "तपरस्तत्कालस्य इति[4] सूत्रे च भाष्यप्रदीपादै सभेदः स्फोटवादः समीक्षणीयः सुहृदयैः शब्दतत्त्वविद्भिः ।

----------------

1- म०भा०- 1/2, मा०सू० 7-8
2- म०भा०- 1/2/45
3- म०भा०- 1/1/68
4- म०भा०- 1/1/70

"चतुर्थोऽध्यायः"

स्फोटव्यञ्जकाः ध्वनयः

1– स्फोटव्यञ्जकाः ध्वनयः ।

2– ध्वनेः पञ्चधा निरूपितः ।

3– ध्वनेः नादरूपता ।

4– ध्वनिभेदाः ।

5– प्राकृतध्वनिनिरूपणम् ।

6– वैकृतध्वनिनिरूपणम् ।

7– ध्वनेः ग्रहणविषयक मतत्रयम् ।

8– ध्वनेरसंवेद्यत्वम् ।

9– स्फोटरूपाविभागेन ग्रहणम् ।

10– स्वातन्त्र्येण ग्रहणम् ।

11– मतत्रयसमीक्षा ।

12– ध्वनेः स्फोटव्यञ्जकत्वे पक्षत्रयम् ।

13– प्रथमपक्षः– ध्वनिना श्रोत्रसंस्कारः ।

14– द्वितीयः पक्षः–ध्वनिना शब्दसंस्कारः ।

15– तृतीयपक्षः– उभयसंस्कारः ।

16– उक्तपक्षत्रयस्य दृष्टान्तैरुपपादनम् ।

## स्फोटव्यञ्जकाः ध्वनयः

नित्योऽपि च विभुरपि च स्फोटात्मा शब्दः ध्वनिना अभिव्यक्त एव उपलब्धिविषयतां भजति। अतो नित्यत्वे विभुत्वेऽपि च न सर्वदा सर्वत्र वा तदुपलब्धिरिति शाब्दिकसिद्धान्तः। तत्र कोऽयं ध्वनिर्नाम कतिविधश्च सः कथंकारं च तेन शब्दोऽभिव्यज्यते इत्यादिकं सर्वं सम्प्रति यथा- सिद्धान्तं विमृशामः। यद्यपि ध्वनिशब्दोऽयं व्युत्पत्तिभेदेन बह्वर्थः, व्यपदिष्टश्च आलाङ्कारिकैरयं विभिन्नेष्वर्थेषु। तथाहि- " व्यंग्यार्थप्रधानं काव्यम् " - उत्तमकाव्यमिति यावत् - ध्वनिरिति आख्यायते तैः। तद्यथा-

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।

व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।

अत्रार्थे ध्वन्यन्तेऽस्मिन्निति अनेनेति वा ध्वनिशब्दस्य व्युत्पत्तिः वेदितव्या। व्यंग्यार्थस्यापि ध्वनिशब्देन व्यवहारो दृश्यते काव्यशास्त्रे, तद्यथा-

"काव्यस्यात्मा ध्वनिरिति बुधैः यः समाम्नातपूर्वः "[2]

अत्रार्थे " ध्वन्यते यः सः ध्वनिः इति ध्वनिशब्दस्य व्युत्पत्तिः। व्यञ्जनाव्यापारोऽपि च ध्वननं ध्वनिरिति व्युत्पत्त्या ध्वनिशब्देनोच्यते। ध्वन्यालोकस्य टीकां कुर्वन् अभिनवगुप्तः आलङ्कारिकाणां ध्वनिसिद्धान्तेन वैयाकरणानां स्फोटसिद्धान्तस्य साम्ञ्जस्यं स्थापयन् ध्वनिशब्दस्य पञ्चविधेषु अर्थेषु

---

1- ध्वन्यालोक- 1/13
2- ध्वन्यालोक- 1/1

प्रयोगं करोति-

ध्वनेः पञ्चधा निरुक्तिः -

1- ध्वनति यः सः व्यञ्जकः शब्दः ध्वनिः ।

2- ध्वनति ध्वनयति वा यः सः व्यञ्जकोऽर्थः ध्वनिः ।

3-ध्वन्यते इति ध्वनिः अर्थात् व्यंग्यार्थः ।

4- ध्वन्यते अनेनेति अथवा ध्वननं ध्वनिः ।

5- ध्वन्यतेऽस्मिन्निति ध्वनिः ।

एवम्प्रकारेण उक्तव्युत्पत्त्यनुसारेण ध्वनिशब्दः क्रमेण व्यञ्जकशब्दं, व्यञ्जकार्थं, व्यंग्यार्थं, व्यञ्जनाव्यापारं तथा च व्यंग्यार्थप्रधानम् काव्यं बोधयति ।

ध्वनेः नादरूपता-

प्रकृतसन्दर्भेतु शब्दोऽयम् कण्ठताल्वाद्यभिघातजन्यं नादमेव विषयीकरोति। शब्दशास्त्रे स्फोटव्यञ्जकध्वनिप्रसंगे सर्वत्र ध्वनिशब्दः उक्तरूपेनादे एव शतशः व्यपदिष्टोऽस्ति। एतच्चानुपदमेव शब्दशास्त्रीयग्रन्थानामुद्धरणैः स्फुटीभविष्यति। अयमेव च स्फोटाभिव्यञ्जकः नादात्मा ध्वनिरिह अस्माकं विमर्शस्य विषयः । शब्दशास्त्रज्ञैरेव प्रथमतया ध्वनिशब्दस्य प्रयोगः कृत इति आनन्दवर्धनाचार्योऽपि स्वीकरोति ।

इदमत्र ध्येयम्- विजातीयैः कण्ठताल्वाद्यभिघातैः भेरीदण्डाद्यभिघातैश्च विविधाः नादाः उत्पाद्यन्ते। त एव च ध्वनय इति आख्यायन्ते, तैश्च सन्नेव

1- प्रथमे हि विद्वांसः वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम्- ध्वन्यालोक 1/13 की वृत्ति ।

शब्दोऽभिव्यज्यते। भेर्यादिभिघातस्थलेऽपि ध्वनिः स्फोटश्च तत्त्वद्वयं शाब्दिकैः अभ्युगम्यते न तु कण्ठताल्वाद्यभिघातस्थले एव। तथा च " तपरस्तत्कालस्य" इति सूत्रे महाभाष्य- " भेर्याघातः भेरीमाहत्य कश्चिद् विंशति पदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः ।[1]

"अभिव्यञ्जकध्वनिवैजात्यवशेनैव शब्दे वैजात्यं प्रतीयते ककारः खकारो गकार इति, । वस्तुतः शब्दः एक एव, ध्वनिविशेषणयुक्ताः एव च एकरूपस्यापि शब्दस्य वर्णपदवाक्यादिकाः अनेकाः विधाः। पदविशेषणाम् अर्थविशेषवाचकत्वव्यवस्थापि च ध्वनिसंसर्गकृता एव। तत्त्वतस्तु एकमेव शब्दतत्त्वम् सर्वार्थशक्तिमत्। अत्र विषये यद्दधिकं वक्तव्यं तत्स्फोटस्वरूपविषयके पूर्वस्मिन् प्रष्टके विशदय उक्तम्-

ध्वनिभेदाः-

शब्दोपलब्धौ उपकारको ध्वनिः द्विविधः प्राकृतो वैकृतश्च । यद्यपि वैकृतध्वनिः न शब्दस्य अभिव्यञ्जकः तथापि शब्दोपलब्धावुपयुज्यत एव स इति भवति शब्दस्योपकारकः', एतच्चानुपदमेव प्रकाशमायास्यति। तत्र शब्दाभिव्यक्तिनिमित्तः कण्ठताल्वाद्यभिघातजन्यः ध्वनिः प्राकृतः । शब्दाभिव्यक्त्युत्तरं जायमानः प्राकृतध्वनिनाभिव्यक्तस्य शब्दरूपस्य चिराचिर-मुपलब्धौ प्रयोजकोऽनुरणनात्मा ध्वनिः वैकृतः। यद्वा "येन विना स्फोट-रूपमनभिव्यक्तं न परिच्छिद्यते सः प्राकृतः, वैकृतस्तु येनाभिव्यक्तं स्फोटरूपं पुनरविच्छेदेन प्रचिततरकालमुपलभ्यते ।"[2] तदुक्तं संग्रहकृता-

---

1- महाभाष्यम् तपरस्तत्कालस्य- 1/1/69

2- वाक्यपदीयम् 1/76 हरिवृत्तौ

शब्दस्यग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ।।

<u>प्राकृतध्वनिनिरूपणम्-</u>

इदमत्र बोध्यम्- कण्ठताल्वाद्यभिघातैः प्रथमतो यो नाद उत्पाद्यते सः प्राकृतो ध्वनिः, स एव शब्दस्याध्यस्तास्वस्वरूपमभिव्यनक्ति। अयं ध्वनिः वक्तृप्रयत्नानुसारेण अपचितः प्रचितश्च जायते। तत्रापचितः अल्पं कालं व्याप्नोति, प्रचितो दीर्घकालम्, प्रचिततरस्तु ततोऽप्यधिककालम्। इमे एव ध्वनेः कालभेदाः ह्रस्वदीर्घादिशब्दैः व्यपदिश्यन्ते। तत्तत्कालिकध्वनिसंसर्गादेव च वस्तुतोऽभिन्न-कालिकोऽपि शब्दः कालभेदनिबन्धनान् ह्रस्वदीर्घादिव्यपदेशान् भजति। तत्र अपचितध्वन्यभिव्यंग्यः शब्दः ह्रस्वः इति, प्रचितध्वन्यभिव्यक्तः शब्दः दीर्घः इति, प्रचिततरध्वन्यभिव्यक्तश्च शब्दः प्लुत इति व्यवह्रियते। अभिव्यञ्जकध्वनिरेव ह्रस्वादिधर्मवान्, न तु शब्दः इति तु तत्त्वम्। यथा आह हरिः-

स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ।।

कारिकामिमां वाक्यपदीयकारः स्वमेव इत्थं व्याचष्टे। " तथा स्वभावभेदा-दपचितध्वनिद्योत्यो ह्रस्वः । तावताभिव्यक्तिनिमित्तेन स्वरूपस्य ग्राहिका-

---

1- वाक्यपदीयम् 1/76 हरिवृत्तौ उद्धृतम् ।

बुद्धिस्तत्रोत्पद्यते। प्रचितध्वनिद्योत्यस्तु दीर्घः, प्रचिततरध्वनिप्रतिपाद्यस्तु प्लुतः।[1]

अस्य प्राकृतध्वनेः प्रचयापचयौ वक्तृप्रयत्नप्रेरितस्य ध्वन्युत्पादकस्य ध्वनिरूपेण परिणमतो वा वायोः प्रचयापचयमूलकौ ( आधिक्याल्पत्वमूलकौ ), तथाहि-नाभिप्रदेशे मूलाधारे वा वक्तृप्रयत्नेनप्रेरितः प्राणवायुः हृदयादिदेशक्रमेण मुखमायातः ताल्वादितत्तत्स्थानेषु आहतः सन् तं तं प्राकृतध्वनिविशेषं जनयति, तत्तद्ध्वनिरूपेण वा परिणमति तद्द्वारेण च शब्दमभिव्यनक्ति। तदुक्तम् शिक्षायाम्-

आत्मा बुद्ध्या समेत्यार्थन् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः +
वर्णान् जनयते --------[2] ।

तत्र विवक्षानुसारेण कश्चिद्वक्तृप्रयत्नः मूलाधारे एव अल्पं वायुं प्रेरयति, कश्चिदधिकम् कश्चिदधिकतरम्, वायुपरिणानुसारेण तज्जन्यध्वनेरपि भवति परिमाणे यद् ह्रस्वादिशब्दैः व्यपदिश्यते। एवञ्च मूलाधारादुद्गच्छतः वायोः आधिक्याल्पत्वे एव ध्वनेः प्रचयापचयौ प्रयोजयतः । स्पष्टमेतत्- अइउण् सूत्रे महाभाष्यप्रदीपोद्योते।[3]

अथ योऽयं ध्वनिकालस्य शब्दे आरोपः, यत्कृतश्शब्दे ह्रस्वादिव्यवहारः, तत्रबीजं ध्वनिशब्दयोरध्यास एव। तथाहि शब्दाभिव्यक्तिकाले ध्वनिः शब्दश्चेति वस्तुतः विविक्तमपि तत्त्वद्वयं नीरक्षीरवत् अविवेकेन

---------------

1- वाक्यपदीयम् 1/76 हरिवृत्ति ।
2- पाणिनीय शिक्षा ।
3- अइउणसूत्रे- महाभाष्यम् ।

गृह्यते। न हि अयं ध्वनिः अयं तदभिव्यक्तः शब्दः इति विवेकज्ञानं भवति कस्यापि- तदुक्तम् -

स्फोटरूपाविभागेन ध्वनेः ग्रहणमिष्यते ।।[1]

विवेकाग्रहादेव च ध्वनिः शब्दस्य प्रकृतिरिव = स्वभाव इव, स्वरूपमिव च मन्यते। अत एवायं ध्वनिः प्रकृतौ = स्वभावे भवः प्राकृतः इति व्युत्पत्त्या, प्रकृतिरेव प्राकृतः इति व्युत्पत्त्या वा प्राकृतशब्देन व्यपदिश्यते। तदुक्तम् --

" स्वभावभेदान्नित्यत्वे "

कालभेदनिबन्धनाः ह्रस्वादयो धर्मा इव कत्वखत्वादिरूपाणि सर्वाणि वैजात्यान्यपि प्राकृतध्वनिगतान्येव ध्वनिशब्दयोः विवेकाग्रहात् शब्दे आरोप्यन्ते।

वैकृतध्वनिनिरूपणम्-

प्राकृतध्वनिना शब्दस्याभिव्यक्तेरूर्ध्वम् अनुरणनात्मकाः ध्वनयो जायन्ते, त एव वैकृतध्वनयः उच्यन्ते। ते च प्राकृतध्वनिना अभिव्यक्तस्य शब्दस्य चिराचिरकालमुपलब्धिं प्रयोजयन्ति।[2] यावदयं वैकृतध्वनिः अनुवर्तते तावत्प्राकृतध्वनिना अभिव्यक्तः शब्दः उपलभ्यते। एतदुच्छेदे तु शब्दोपलब्धिरपि विरमति। अयमेव ध्वनिः द्रुतादिवृत्तिभेदे निबन्धनम्, तथाहि- शब्दोच्चारणे तिस्रो वृत्तयः भवन्ति- द्रुतामध्याविलम्बिता च। तिसृष्वपि वृत्तिषु

---

1- वाक्यपदीयम् - 1/76

2- शब्दाभिव्यक्तेरूर्ध्वं जायमानस्तु घण्टानादाभिस्वनवद् वैकृतो ध्वनिः शब्दस्य चिराचिरस्थितिभेदे निमित्तत्वं प्रतिपद्यते इति । वाक्यपदीयम् 1/76 अम्बाकर्त्री ।

शब्दस्य कालो न भिद्यते, यतः प्राकृतध्वनेरेव कालः शब्दे आरोप्यते,प्राकृत-ध्वनिश्च वृत्तिभेदेऽपि तुल्यपरिमाणं एव भवति । वृत्तिभेदस्तु प्राकृतध्वन्युत्तरजायमानवैकृतध्वनिमूलकः।

वैकृतध्वनिशब्दयोस्तु नेतरेतराध्यासः, वैकृतध्वनिर्हि शब्दाद् विवेकेन गृह्यते।[1] भेदोऽयं घण्टादीनां शब्देषु स्फुटं परिलक्ष्यते। अतः द्रुता-दिवृत्तिभेदेऽपि न शब्दस्य कालभेदः । तदुक्तम् वार्तिककृता- " सिद्धन्त्व स्थिताः वर्णाः वक्तुश्चिराचिरवचनात् वृत्तयो विशिष्यन्ते ।"[2] तदेवं प्राकृत-ध्वनिः शब्दमभिव्यनक्ति- वैकृतध्वनिस्तु तम् चिराचिरमुपलम्भयति इति ध्वनेः अनयोः द्वयोः विधयोः विशेषः । उभावपि वाभिव्यक्तिद्वारेण उपलब्धिद्वारेण वा शब्दमुपकुरुतः । तदुक्तम् हरिणा-

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः[3]
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ।।

अत्र स्फोटात्मा तैः न भिद्यते इत्यस्य- वैकृतध्वनिकालभेदेऽपि न शब्दस्य कालभेदः, यतः शब्दाभिव्यक्त्युत्तरं जायमानत्वात् वैकृतध्वनिः शब्दात्पृथगेव उपलभ्यते इत्याशयः । संग्रहकारोऽप्याह -

" स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते "[4]

---------------

1- वाक्यपदीयम् 1/104
2- तपरस्तत्कालस्य महाभाष्यम्
3- वाक्यपदीयम् 1/77
4- वाक्यपदीयम् 1/76 हरि वृत्तौ उद्धृतम्

अयमाशयः– यथा प्रदीपप्रकाशः उत्पद्यमानैः सतामेव अन्धकारावृतानां ग्रहणे हेतुः भवति, इदमेव च तस्य घटाद्यभिव्यञ्जकत्वम् । अनुवर्तमानश्च सः घटादिग्रहणस्य अविच्छेदलक्षणो यः प्रबन्धः तं प्रयोजयति। एवमेव प्रकृतेऽपि उत्पद्यमानप्रकाशस्थानीयः प्राकृतध्वनिः शब्दस्य ग्रहणे हेतुभावं भजति– शब्दमभिव्यनक्ति– इति यावत् । अनुवर्तमानप्रकाशस्थानीयो वैकृतध्वनिस्तु ग्रहणानुवृत्तिमादधाति। इयमेव ग्रहणानुवृत्तिः उक्तसंग्रहवचने स्थितिशब्देन विवक्षिता।

<u>ध्वनेः ग्रहणविषयकं मतत्रयम् –</u>

अथ योऽयं स्फोटाभिव्यञ्जको ध्वनिः सः गृह्यते न वा। गृह्यते चेत् शब्दात्पृथग्रूपेण शब्दरूपाविभागेन वेति सम्प्रति विमर्शः। अत्र विषये त्रीणि दर्शनानि[2] – ध्वनिः सर्वथैव न गृह्यते, शब्दादविभागेन गृह्यते, शब्दात्पृथग्गृह्यते इति ।

<u>ध्वनेरसंवेद्यत्वम् –</u>

तत्र ध्वनेः सर्वथैवाग्रहणवादिनाम् अयमाशयः, यथा चक्षुरादीन्द्रियाणि तद्गतानि रूपादीनि च स्वमगृह्यमाणान्येव तत्तद्विषयोपलब्धिं प्रयोजयन्ति। न हि चक्षुरिन्द्रियं तद्गतम् रूपं वा स्वेन परेण वा गृह्यते ।

---

1– वाक्यपदीयम् 1/8।

अगृह्यमाणमेव च घटादिग्रहणे भवति निमित्तम्। एषैव गतिः इन्द्रियान्तराणामपि। एवम् कण्ठताल्वाद्यभिघातोत्पन्नः ध्वनिः स्वमगृह्यमाण एव स्फोटमभिव्यनक्ति। परन्तु अस्मिन् दर्शने यदि ध्वनिः सर्वथैवासंवेद्यः तदा ध्वन्युत्पादकस्य कण्ठताल्वाद्यभिघातस्य स्फोटाभिव्यक्तेश्च मध्ये कृतं ध्वन्युत्पत्तिकल्पनया। यदेव ध्वन्युत्पादकं निमित्तं कण्ठताल्वाद्यभिघातरूपं तदेवास्तु साक्षात् स्फोटाभिव्यञ्जकमितिपर्यनुयोगः = आक्षेपः लभतेऽवसरम्।

स्फोटरूपाविभागेन ग्रहणम्–

शब्दरूपाविभागेन ध्वनेः ग्रहणमातिष्ठमानानां पुनरेषा दृष्टिः–ध्वनिः न सर्वथा असंवेद्यः, भवति तस्य संवेदनम्, परन्तु स्फोटरूपाविभागेन नीरक्षीरवत् स्फोटरूपसंमिश्र एव ध्वनिरूपलभ्यते, ध्वनिरूपसंमिश्र एववा स्फोटः । नहि अयं ध्वनिः अयं तदभिव्यंग्यः शब्द इति शब्दाद् विवेकेन ध्वनेरूपलब्धिः। यथा जपाकुसुमसम्पर्की स्फटिकः जपाकुसुमलौहित्याविभागेनैव उपलभ्यते जपाकुसुमरूपरूषित एवोपलभ्यते। एवम् ध्वनिरूपरूषित एव शब्दः गृह्यते। न हि तत्र शब्दरूपात्पृथग् ध्वनिरूपरूषित एव शब्दः गृह्यते। न हि तत्र शब्दरूपात्पृथग्-ध्वनिरूपस्यावधारणम् ।

स्वातन्त्र्येण ग्रहणम् –

अन्ये तु शब्दात्पृथग् ध्वनेः ग्रहणमिच्छन्ति। अस्मिन् सिद्धान्ते न शब्दरूपोपलब्धिपरतन्त्रा ध्वन्युपलब्धिः। अत एव शब्दोपलब्धिमन्तरेणापि भवति ध्वन्युपलब्धिः । अत एव च जिह्वायाः ईर्षदन्तरपाते शब्दाभिव्यक्त्यर्थम्

अपेक्षितयावद्व्यापाराभावे इति यावत्, शब्दानुपलब्धावपि ध्वन्युपलब्धिः दृश्यते। अत एव च दूराद् महति जनसमूहे शब्दं कुर्वति शब्दस्वरूपानवधारणेऽपि महान् ध्वनिः श्रूयते इति भवति ध्वन्युपलम्भानुभवः । एतदेव च शब्दस्थले ध्वनिसत्तायाम् गमकम्। दर्शनत्रयमेतद् वाक्यपदीये इत्थं वर्णितम् –

स्फोटरूपाविभागेन ध्वनेः ग्रहणमिष्यते ।

केश्चिद्ध्वनिरसंवेधः स्वतन्त्रोऽन्यैः प्रकल्पितः ।।[1]

मतत्रयसमीक्षा–

इदमत्र ध्येयम्– यद्यपि जिह्वायाः ईषदन्तरपाते दूराद् महति जनसमूहे शब्दं कुर्वति वा शब्दस्वरूपानवधारणेऽपि ध्वन्युपलब्धिः भवति[2] । इयांस्तु विशेषः यदाद्ये अपेक्षितयावद्व्यापाराभावात् शब्दस्वरूपमभिव्यज्यते एव न, ध्वनिमात्रमेव च उत्पद्यते। द्वितीये शब्दरूपमभिव्यज्यते परन्तु दूरत्वादि-दोषवशेन तन्नगृह्यते, ध्वनिरूपमात्रन्तु लक्ष्यते– ध्वन्यंशस्यैव ग्रहणं न तु स्फोटांशस्येति यावत् । एवमुरीत्या ध्वन्युपलब्धिः न स्फोटोपलब्धिपरतन्त्रा, तथापि शब्दरूपानवधारणस्थले भवेन्नाम स्वातन्त्र्येणध्वन्युपलब्धिः। शब्दरूपावधारण-स्थले तु न शब्दात्पृथग् ध्वनिरुपलभ्यते, न हि शब्दमुपलभमानः तद्विवेकेन ध्वनिमुपलभते, अयं शब्दोऽयं ध्वनिरिति। यत्र ध्वनिना स्फोटोऽभिव्यज्यते

---

1– वाक्यपदीयम् – 1/8।

2– महति जनसमवाये च स्फोटरूपानवधारणे दूराद ध्वनेरुपलम्भ इति वा०प० 1/8। अम्बाकर्त्रयाम् ।

गृह्येते चापि तत्र ध्वनिरूपाच्छादित एव सः गृह्यते नीरक्षीरवत । तदेवं शब्द-ग्रहस्थले स्फोटरूपाविभागेनैव ध्वनेर्ग्रहणम्, शब्दाग्रहस्थले तु स्वातन्त्र्येणेति "स्फोटरूपाविभागेन ध्वनेग्रहणमिष्यते, स्वतन्त्रोऽन्यैः प्रकल्पितः इत्यनयोः वाक्यपदीयोक्तयोः प्रथमतृतीययोः दर्शनयोः विषयभेदेन शक्यः समन्वयः ।

शब्दाग्रहणस्थले ध्वनेः स्वातन्त्र्येण ग्रहणस्य अनुभवसिद्धत्वात् कण्ठताल्वाद्यभिघातस्य ध्वन्युत्पत्तौ हेतुता अवश्यमभ्युपगन्तव्या, ततश्च शब्द-ग्रहणस्थलेऽपि ध्वन्युत्पत्तिहेतोः ताल्वाद्यभिघातस्य सत्त्वेन कारणसत्त्वे अवश्यं कार्यमितिनियमात् शब्दात्पृथग् ध्वनेरनुपलब्धावपि कारणबलेन ध्वन्युत्पत्तिर-भ्युपगन्तव्या। पृथगनुपलब्धिस्तु ध्वनिशब्दयोः विवेकाग्रहादित्यन्त।ध्वनेः सर्वथा असंवेद्यत्वपक्षे तु तत्सत्ता निष्प्रमाणा स्यात्।

ध्वनेः स्फोटव्यञ्जकत्वे पक्षत्रयम् -

कण्ठताल्वाद्यभिघातजन्यः प्राकृतो ध्वनिःसन्तमेव स्फोटाख्यं शब्दमभिव्यनक्ति, ध्वन्यभिव्यक्तश्च शब्दो भवति उपलब्धिविषयः इत्युक्तम्। इदानीं यदिदं ध्वनिना शब्दस्याभिव्यञ्जनम्, तद्विषये पक्षत्रयमुपदर्श्यते। पक्ष-त्रयमिदम् वाक्यपदीये सोदाहरणं वर्णितमस्ति आचार्येण। तद्यथा-

इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा।
क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ।।

---

1- वाक्यपदीयम् 1/78

प्रथमपक्ष:-

ध्वनिना श्रोत्रसंस्कार:-

कण्ठताल्वाद्यभिघातोत्पन्नो ध्वनि: श्रोत्रेन्द्रियमेव संस्करोति, ध्वनिसंस्कृतेन च श्रोत्रेण शब्दस्योपलब्धि: इत्येक: पक्ष:[1]। अस्मिन् पक्षे इदमेव ध्वने: शब्दाभिव्यञ्जकत्वम् यत् श्रोत्रेन्द्रियसंस्कारद्वारेण शब्दोपलब्धि-हेतुत्वम्[2]। ध्वनिना य: श्रोत्रसंस्कार: सोऽपि द्वेधा शक्यते वर्णयितुम् -

(1) शब्द:सन्नेव,परन्तु श्रोत्रम,यद्, तम न गृह्णाति,तत्र ग्रहणासमर्थे श्रोत्रे ध्वनिना अपूर्व: शक्तिविशेष: आधीयते। आहितशक्तिकञ्च श्रोत्रं शब्दं ग्रहीतुं क्षमते इति श्रोत्रस्य शब्दग्रहणानुकूलम् अपूर्वशक्तिविशेषाधान-मेव ध्वनिना श्रोत्रस्य संस्कार: इति श्रोत्रसंस्कारस्य एका विधा[3]।

(2) श्रोत्रे विद्यमाना एव,परन्तु अभिव्यक्ता शब्दग्रहणानुकूलाशक्ति : ध्वनिना प्रबोध्यते, ध्वनिप्रबोधिताशक्तिकञ्च श्रोत्रं शब्दग्रहणेप्रभवति इति विद्यमानाया एव प्रसुप्तकल्पाया: श्रोत्रगताया: शब्दग्रहणानुकूलशक्ते: प्रबोधनमेव ध्वनिना श्रोत्रस्य संस्कार: इति संस्कारस्य अपरा विधा[4]।

---

1- ध्वनिरुत्पद्यमान: श्रोत्रं संस्कारोति,तच्च संस्क्रियमाणं शब्दोपलब्धौ द्वारतां प्रतिपद्यते। वा0प0 1/78

2- वाक्यपदीयम् 1/78 हरिवृत्तौ प्रदर्शितम् ।

3- श्रोत्रस्य संस्कारो नाम ग्रहणासमर्थस्य श्रोत्रस्यापूर्वशक्त्याधानम् - वा0प0 1/78 अम्बाकर्त्र्याम् ।

4- विद्यमानाया: वा शब्दग्रहणशक्तेरनभिव्यक्ताया: प्रबोधोऽभिव्यञ्जनम् वा0प0 1/78 अम्बाकर्त्र्याम् ।

§3§ ध्वनिरुत्पद्य परितः प्रसरन् श्रोत्रेन्द्रियेण संनिधीयते, ध्वनिसहितश्च श्रोत्रं शब्दम् गृह्णाति। श्रोत्रेण शब्दस्य ग्रहणे तस्य ध्वनिसंपर्को हेतुरिति शब्दग्रहणानुकूलं यत् श्रोत्रस्य ध्वनिसान्निध्यम् तदेव ध्वनिना श्रोत्रस्य संस्कारः इति श्रोत्रसंस्कारस्य तृतीया विधा।[1] कीदृशोऽपि वा भवतु ध्वनिना श्रोत्रसंस्कार, पक्षेऽस्मिन् ध्वनिना शब्दो नोपक्रियते अपितु श्रोत्रमेव उपक्रियते शब्दग्रहणानुकूलतां नीयते इति यावत् ।

द्वितीयपक्षः–

ध्वनिना शब्दसंस्कारः–

ध्वनिना शब्दस्य एव संस्कारः क्रियते न इन्द्रियस्य इति द्वितीयः पक्षः । अस्मिन् पक्षे शब्द एव अभिव्यञ्जकध्वनिसंसर्गात् लब्धसंस्कारः श्रोत्रस्य विषयता भजति–[2] श्रोत्रेणोपलभ्यते इति यावत् ।यथा इन्द्रियसंस्कारपक्षे श्रोत्रे सती एव परन्त्वनभिव्यक्ता शब्दग्रहणानुकूला शक्तिः, ध्वनिना देशविशेषपरिच्छेदेन अभिव्यज्यते, अभिव्यक्तश्च भवति श्रोत्रस्य विषयः । अनभिव्यक्तास्तु विद्यमानशक्तिकस्य प्रबुद्धशक्तिकस्य वाऽश्रोत्रस्य विषयतां न व्रजति इति शब्दस्य

---------------

1– शब्दग्रहणरूपार्थक्रियानुकूलं श्रोत्रे ध्वनिसान्निध्यमेव श्रोत्रस्य संस्कारः ध्वनिकृत इति। वा०प० 1/78 अम्बाकर्त्रयाम् ।

2– शब्दएव स्वाभिव्यञ्जकध्वनिसंसर्गात् प्राप्त-संस्कारः श्रोत्रस्य विषयत्वं गच्छति । वाक्यपदीयम्– 1/78 हरिवृत्तौ।

अभिव्यक्तिरेव तस्य ग्रहणे हेतुः न तु श्रोत्रस्य शक्त्युद्बोधादिकम् । एवञ्च शब्दस्य या ध्वनिना अभिव्यक्तिः सैव शब्दस्य संस्कारः। अस्मिन् पक्षे ध्वनिना श्रोत्रे नापूर्वशक्तिविशेषः उत्पाद्यते,न वा विद्यमाना शक्तिः प्रबोध्यते-श्रोत्रस्य न किमपि उपक्रियते इति यावत्, अपितु अभिव्यक्त्यात्मकः शब्दस्यैव उपकारः क्रियते ।

तृतीयपक्षः-

उभयसंस्कारः-

ध्वनिः श्रोत्रशब्दयोः उभयोरपि संस्कारकः इति तृतीयः पक्षः[2] । अस्मिन् पक्षे अभिव्यञ्जनद्वारेण शब्दम्, शब्दग्रहणानुकूलशक्त्युद्बोधनद्वारेण श्रोत्रञ्च संस्कुर्वन् ध्वनिः शब्दोपलब्धौ निमित्तं भवतीति शब्दश्रोत्रे उभे अपि ध्वनिना उपक्रियेते। तत्र ध्वनिना शब्दस्य संस्कारः पूर्वोक्तविध एव अर्थादभिव्यक्त्यात्मकः। एवं श्रोत्रस्यापि संस्कारः उक्तविध एव अपूर्वशक्त्युत्पादनविद्यमान-शक्तिप्रबोधनादिरूप इति यावत् ।

उक्तपक्षत्रयस्य दृष्टान्तैरुपपादनम्-

अथ ध्वनिना श्रोत्रस्यैव संस्कारः शब्दस्यैव वा, उभयोः वा इति यदुक्तम्, तत्र किं कस्यचिद् इन्द्रियस्यैव संस्कारद्वारेण विषयस्योपलब्धौ निमित्तभावो दृष्टः,यत् प्रकृते ध्वनिना श्रोत्रस्यैव संस्कार इत्यास्थीयते। किं वा

---

1- वाक्यपदीयम् - 1/78 अम्बाकर्त्री ।
2- ध्वनिरुभयोः शब्दश्रोत्रयोरनुग्रहे वर्तते। 1/78 हरिवृत्तौ।

विषयस्यैव संस्कारद्वारेण तदुपलब्धौ कस्यचिन् निमित्तभावः प्रतीतः यत् प्रकृते शब्दस्यैव ध्वनिना संस्कार इत्युरीक्रियते। किं वा इन्द्रियविषययोः उभयोः संस्कारेऽस्ति कश्चित् सम्प्रतिपन्नो दृष्टान्तः यद्बलेन प्रकृते तृतीयपक्षः शक्यते व्यवस्थापयितुमिति चेत्, उच्यते- ध्वनिविषयकं पक्षत्रयमपि इदं दृष्टान्तसिद्धम्। तथाहि- समाधानाञ्जनादेः इन्द्रियमात्रसंस्कारकता,[1] तद्द्वारेण च विषयोपलब्धौ निमित्तता दृष्टा। चित्तैकाग्रतारूपं समाधानं[2] मनः, तद्द्वारेण च चक्षुरादीनि बाह्येन्द्रियाणि संस्कुर्वत् तत्तद्विषयोपलब्धौ निमित्तभावं भजति। समाहितमना एव हि मनोग्राह्यान इव तत्तद्-बाह्येन्द्रियग्राह्यानपि विषयान् ग्रहीतुं क्षमते, न त्वसमाहितमनाः। तत्र एकाग्रतारूपेण समाधानेन इन्द्रियमेव संस्क्रियते न तु विषयः। न हि विषये समाधानेन कश्चिद् विशेष आधीयते। तथासति एकस्य समाहितमनसः समाधानेन विषये संस्कृते तस्य विषयस्य समाहितमनसा इव असमाहितमनसापि पुरूषेण ग्रहणं प्रसज्यते। इन्द्रियस्यैव संस्कारे तु नैषा आपत्तिः। समाधानेन संस्कृतमना एव संस्कृतेन्द्रिय एव वा पुरूषो विषयं गृह्णाति न त्वन्यः, तदीयेन्द्रियस्य समाधानेन असंस्कृतत्वात्। एवमञ्जनादिकमपि चक्षुरादेः इन्द्रिय-स्यैवसंस्कारद्वारेण विषयोपलब्धौ निमित्ततां याति। अञ्जनादिना हि चक्षुरादीन्द्रिये एव विशेष आधीयते न तु विषये। एवमेव प्रकृते ध्वनिना श्रोत्रस्यैव संस्कार इति पक्षः उन्नेयः। पक्षेऽस्मिन् अयमेव दृष्टान्तः

---

1- तथाञ्जनादिद्रव्यं चक्षुरेव संस्करोति, न बाह्यं विषयम्- 1/79 हरिवृत्तौ।

2- तत्र समाधानं चेतसोऽभिसंस्कारः एकाग्रतारूपः। 1/79 अम्बाकर्त्रयाम्।

वाक्यपदीयकृता इत्थमुपस्थापितः – " इन्द्रियस्यैव संस्कारः समाधानाञ्ज-
नादिभिः"[1] एतद्- दृष्टान्तद्वारेण च हरिः आद्यं पक्षमुपपादयति। तथाहि
अत्र भवत्यनुमानप्रयोगः – श्रोत्रं संस्कृतं सत् स्वविषयग्राहकम्, इन्द्रियत्वात्,
समाधानाञ्जनादिसंस्कृतमनश्चक्षुरादिवत्[2] ।

ध्वनिना शब्दस्यैव संस्कारः इति द्वितीयस्मिन् पक्षे तु दृष्टान्तमाह
हरिः –

" विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये[3] ।"

आतपादिना संस्कृतस्य तैलादेः, उदकसेकेन संस्कृतायाः ग्रीष्म-
परितप्तायाःपृथिव्याः, गोघृतमर्दनेन च संस्कृतस्य केशरादेः गन्धप्रतिपत्तिः
दृष्टा[4] । तत्र आतपादिना द्रव्यस्यैव संस्कारः, तद्गन्धप्रतिपत्तौ हेतुः, न
तु घ्राणेन्द्रियस्य संस्कारः । नहि आतपोदकसेकादिना घ्राणेन्द्रिये कश्चिद् विशेष
आधीयते यद्बलेन घ्राणेन्द्रियं तैलादिगतं गन्धम् गृहीतुं क्षमते, इति युज्जते वक्तुम्।
तथासति संस्कृतासंस्कृतविषयाणां ग्रहणाग्रहणव्यवस्था नोपपद्येत। आतपोदकसेकादिना
घ्राणेन्द्रियस्य संस्कारे तु संस्कृतघ्राणेन पुरुषेण आतपोदकसेकसंपर्किणः तैलादेरिव तच्छू-
न्यस्यापि तैलादेः गन्धप्रतिपत्तिः प्रसज्येत, विषये विशेषाभावात्। तस्मात् आत-

---

1– वाक्यपदीयम्– 1/79 ।
2– वाक्यपदीयम् – 1/78 अम्बकात्रयीम् ।
3– वाक्यपदीयम् 1/79
4– विषयस्य तु गन्धतैलादीनामातपादिभिः पृथव्याश्चोदकसेकेन
कुङ्कुमस्य च गोघृतमर्दनेन संस्कारः तेषां गन्धप्रतिपत्तये दृष्टः ।
वा०प० 1/79 अम्बाकत्रयम् ।

पादकमैकादिना विषयस्यैव संस्कारः नेन्द्रियस्येतिस्थितम् । एवम् प्रकृतेऽपि ध्वनिना शब्दरूपस्य विषयस्यैव संस्कारो न श्रोत्रस्येति द्रष्टव्यम्। भवति चात्र अनुमानप्रयोगः इत्थम् - शब्दः संस्कृतः सन् इन्द्रियग्राह्यः, विषयत्वात्, आतपादकेसकादिसंस्कृततैलपृथव्यादिगन्धवत् ।

यद्यपि उक्तदृष्टान्ते आतपादकेसकादिना गन्धात्मकस्य घ्राणेन्द्रियविषयस्य न साक्षात् संस्कारः अपितु तैलादिरूपस्य द्रव्यस्यैव, तथापि आश्रयसंस्कारद्वारा विषयसंस्कारो बोध्यः ।

श्रोत्रशब्दयोरुभयोः ध्वनिना संस्कारः इत्यस्मिन् तृतीये पक्षे तु आलोकेन चक्षुरिन्द्रियतद्विषययोः उभयोः संस्कारो दृष्टान्तः । तथाहिचक्षुः विषयदेशं प्राप्य- विषयेण संयुज्येति यावतविषयं गृहणाति। तत्र बाह्येन सौराद्यालोकेन अक्षिगोलकात् निस्सरच्चक्षुरिन्द्रियं, तद्विषयो घटादिश्च इत्युभयमपि संस्क्रियते। चक्षुरिन्द्रियं हि तैजसं- तेजोरश्मीरूपं प्रकाशान्तररश्मय इव चक्षूरश्मयोऽपि उत्तरोत्तरं पृथवाग्राः सन्तः बहिर्देशे प्रसरन्ति, विषयेण च संयुज्यते। अनुद्भूतरूपस्पर्शत्वाच्च तेजोऽन्तराणामिव चक्षूरश्मीनां चक्षुषा न ग्रहणम्, चाक्षुषप्रत्यक्षे उद्भूतरूपस्य कारणत्वात् । तदुक्तम्-

" उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति ।"[2]

----------------

1- वाक्यपदीय 1/78 अम्बाकर्त्री
2- न्यायसिद्धान्तमुक्तावली- भाषापरिच्छेदः

तत्र बाह्येन सौराद्यालोकेन विषयगतं तिमिरं निराक्रियते, चक्षूरश्मयश्च प्रवर्ध्यन्ते । (प्रसार्यन्ते) इति तिमिरनिराकरणेन विषयः, चक्षूरश्मिप्रवर्धनेन चक्षुरिन्द्रियञ्चेति द्वयमपि संस्क्रियते। एवम् प्रकृते ध्वनिना अभिव्यक्तिरूपः शब्दस्य संस्कारः, शब्दग्रहणानुकूलशक्त्युद्बोधनादिरूपश्च श्रोत्रस्य संस्कारः क्रियते तदाह वाक्यपदीयकारः –

> चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।
> विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः ।।1

अत्र "तेजसा" इति तेजश्शब्दः बाह्यसौराद्यालोकपरः । अस्यां हरिकारिकायां " चक्षुषः प्राप्यकारित्वे " इत्यनेन चक्षुरिन्द्रियविषये पक्षद्वयं सूचितम् – प्राप्यकारित्वमप्राप्यकारित्वञ्चेति । तत्र प्राप्यकारित्वपक्षे तेजसा इन्द्रियविषययोः उभयोः संस्कारः, अप्राप्यकारित्वपक्षे तु विषयस्यैव संस्कारः, न चक्षुरिन्द्रियस्येति दर्शितम्। तथाहि– तमस्यवस्थितोऽपि द्रष्टा आलोकेऽवस्थितं घटादिविषयं चक्षुषा प्रतिपद्यते, तिमिरावृतं तु न गोचरयति इत्यालोकसम्बन्धासम्बन्धाभ्यां विषयस्य ग्रहणाग्रहणयोः अनुभवसिद्धत्वात् आलोकेन विषयस्य संस्कारो निर्विचिकित्सः। चक्षुरिन्द्रियस्य संस्कारे परम् अस्ति विप्रतिपत्तिः मतभेदेन। तथाहि– चक्षुरिन्द्रियविषये [illegible] दार्शनिकानाम्– चक्षुरिन्द्रियं बुद्बुदोपमानं, खद्योतादितेजोवत् स्वगोलक–निःसृतमेव सत् बहिरवस्थितान् विषयान्

---

1– वाक्यपदीयम्, 1/80

गृह्णाति न तु गोलकात् तद्रश्मयो निस्सरन्ति, संयुज्यन्ते च विषयेण। इत्थञ्च चक्षुरिन्द्रियं विषयदेशमप्राप्यैव केन्द्रस्थितमेव विषयस्य ग्राहकमित्येकम् मतम् । अयमेव चक्षुषो प्राप्यकारित्वपक्षः । पक्षोऽयं बौद्धानाम् । वैशेषिकादयस्तु प्राप्यकारित्वमिच्छन्ति । एतन्मतानुसारेण प्रदीपादिरश्मय इव चक्षुरश्मयोऽपि गोलकान्निस्सरन्तः उत्तरोत्तरं पृथ्वग्राणि रश्म्यन्तराणि आरभमाणाः विषयदेशं प्राप्य विषयेण संयुज्यन्ते। तत्र यदा संतमसेऽवस्थितो द्रष्टा आलोकावस्थितं विषयं गृह्णाति, तदा नयनरश्मयः सूक्ष्मा नयनात् संततम् निर्गत्य तेजः परमाणूनां व्यापित्वेन सर्वत्र सुलभत्वात् अन्तरालवर्तिभिः तेजः परमाणुभिः संबन्ध्यमानाः सूक्ष्मतरं रश्मिद्रव्यान्तरं पृथ्वग्रमारभमाणास्तावद् गच्छन्ति यावदालोकः । ततः आलोकेन तेषां चक्षुस्वरूपभूतानां रश्मीनाम् प्रवर्धनरूपः संस्कारः । अप्राप्यकारित्वपक्षे तु चक्षुषो बहिर्निस्सरणानङ्गीकारात् न बाह्येन तेजसा तस्य कश्चिदनुग्रहः क्रियते। तदेतत् सकलमभिप्रेत्य वाक्यपदीयकारः उक्तकारिकायां "चक्षुषा प्राप्यकारित्वे" इत्याह ।

तदेवं तेजसा इन्द्रियविषययोरुभयोः संस्कारनिदर्शनेन ध्वनिना शब्द-श्रोत्रयोरुभयोः संस्कारः शक्यते व्यवस्थापयितुम् । एवम् ह्यत्र अनुमानप्रयोगः - शब्दश्रोत्रे युगपत्संस्कृते ग्राह्यग्राहकभावभाजी, कादाचित्कतद्भावाश्रयत्वात्, चक्षुषः प्राप्यकारित्वपक्षे चक्षुर्विषयवत् ।

इदमत्रध्येयम्- शब्दाभिव्यक्तिवादिभिः ध्वनिभिः श्रोत्रेन्द्रियस्य

---

1- वाक्यपदीयम्- 1/80 अम्बाकर्त्री ।

संस्कारः स्वीक्रियताम् मा वा स्वीक्रियताम्, शब्दस्य अभिव्यक्त्यात्मकः संस्कारस्तु स्वीकार्य एव, अन्यथा अभिव्यक्तिसिद्धान्तस्यैव उच्छेदः। वस्तुतस्तु अभिव्यक्तिवादे ध्वन्यभिव्यक्त एव शब्दः श्रोत्रेण ग्राह्यः इति इयता एवं सकलसामाजस्ये ध्वनिना श्रोत्रस्यापि कश्चित्संस्कारः क्रियते, श्रोत्रेऽपि कश्चिद् विशेष आधीयते इति कल्पना निष्प्रमाणा एव प्रतीयते। यद् ध्वन्यभावे शब्दस्य अग्रहणं तदभिव्यञ्जनरूपस्य शब्दसंस्कारस्याभावात् श्रोत्रं यदि शब्दग्रहणशक्तिमत् तदा सर्वदैव शब्दं गृहीतुं क्षमते एव, शब्दस्यैव तु अभिव्यक्तिरपेक्ष्यते, सा च ध्वनिना क्रियते इति द्रष्टव्यम् ।

### "अभिव्यक्तिवादे आक्षेपनिराकरणम्"

एको, नित्यो, विभुश्च शब्दो ध्वनिनाभिरभिव्यज्यते इत्येतस्मिन् शाब्दिकसिद्धान्ते केचन प्रतिवादिनः बहुधा प्रत्यवतिष्ठन्ते। ते हि ध्वनिशब्दयोः व्यङ्ग्यव्यञ्जकभावे अनेकान् पर्यनुयोगान् उपस्थापयन्ति, त एव आक्षेपाः सम्प्रति अनूद्य निरस्यन्ते ।

<u>प्रथमः आक्षेपः</u>:-

तथाहि नित्यस्य शब्दस्य ध्वनिना अभिव्यक्तिः न संभवति,[1] अभिव्यक्तेः अनित्यत्वेन व्याप्तत्वात् । लोके हि अनित्यस्यैव घटादेः प्रदीप-

---

1- अत्र नित्यस्य शब्दस्य ध्वनिभिराभिव्यक्तिर्न संभवति, अनित्यानामेव घटपटादीनाम् प्रदीपप्रकाशेनाभिव्यक्तिः दर्शनात् । वा०प० 1/95 अम्बाकर्त्री ।

प्रकाशादिना अभिव्यक्तिः दृष्टा। ततश्च यदि ध्वनिना शब्दस्य अभिव्यक्तिः तदा घटादिवत् तस्य अनित्यत्वं प्रसज्यते। अनित्यत्वे च कृताभिव्यक्तिकल्पनया। अभिव्यक्तिस्थाने उत्पत्तेरेव स्वीकर्तुम् शक्यत्वात्, शब्दनित्यतासिद्धान्तभङ्गश्च भवति इति तेषामेकः आक्षेपः ।

द्वितीयः आक्षेपः -

देशभेदादपि ध्वनिशब्दयोः व्यङ्ग्यव्यञ्जकभावो न संभवति,[1] समानदेशस्थयोः हि प्रदीपप्रकाशघटयोः व्यङ्ग्यव्यञ्जकभावो लोके दृष्टः । ध्वनिशब्दौ तु भिन्नदेशस्थौ, यथा हि- जिह्वाग्रामूलादितत्करणस्थानापाश्रितैः संयोगैः ध्वनिरुत्पाद्यते, तेन च शब्दोऽभिव्यज्यते इति तत्तत्करणादीन्येव ध्वनेः देशः। स्थानकरणाभिघातैरेव साक्षात् शब्दोऽभिव्यज्यते, न तु मध्ये ध्वन्युत्पत्तिः, इति दर्शने तु स्थानकरणाभिघाता एव शब्दस्य अभिव्यञ्जकाः, तेषाञ्च तत्तत्स्थानकरणादयः स्फुटमेव देशाः, अभिव्यङ्ग्यः शब्दस्तु आकाशदेशस्थः, तदुक्तं भाष्ये- श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः।[2] एवम् स्थिते भिन्नदेशस्थैः, विप्रकृष्टदेशस्थैश्च ध्वनिभिः श्रोत्राकाशदेशे शब्दस्य अभिव्यक्तिः न युज्यते, भवति चात्र अनुमानप्रयोगः- शब्दो ध्वनिभिः नाभिव्यज्यते, व्यञ्जकदेशभिन्नदेशस्थत्वात् यदभिव्यज्यते तन्न व्यञ्जकदेशभिन्नदेशस्थम् यथा- व्यञ्जकप्रदीपसमानदेशस्थो घटादिरिति तेषामपरं प्रत्यवस्थानम् ।

---

1- नन्वभिव्यङ्ग्याभिव्यञ्जकयोः ध्वनिशब्दयोः देशभेदात् नाभिव्यज्यते शब्दः- वा०प० 1/96 अम्बाकर्त्री ।

2- व्याकरणमहाभाष्यम् - अणुदित् सवर्णस्य चाप्रत्ययः 1-1-69,

तृतीयः आक्षेपः -

अतश्च हेतोः शब्दस्य ध्वन्याभिव्यङ्ग्यत्वं न युज्यते, यतः यदभिव्यङ्ग्यम् भवति, तन्न नियताभिव्यञ्जकापेक्षम्- नियतं किञ्चिदेकमेव अभिव्यञ्जकं नापेक्षते इति वाच्यं[1] । यथा- प्रदीपाभिव्यङ्ग्यो घटादिः न नियतम् प्रदीपमेव स्वाभिव्यक्तावपेक्षते, अपितु मणिरत्नचन्द्रादिप्रकाशैरपि अभिव्यज्यते। एवञ्चाभिव्यङ्ग्यस्य न नियताभिव्यञ्जकापेक्षो नियमः क्वचिद् दृष्टः, शब्दस्य पुनः नियतम् तत्तद्ध्वनिभिरेव अभिव्यज्यते। नियतं तं तं ध्वनिम् स्वाभिव्यक्तावपेक्षते इत्यभ्युपगम्यते अभिव्यक्तिवादिभिः, अतो न शब्दोऽभिव्यङ्ग्यः, अपितु तत्तत्स्थानकरणादिजन्य एव । एवं हि अत्रानुमानप्रयोगः - शब्दो नाभिव्यङ्ग्यः, नियताभिव्यञ्जकापेक्षत्वात्, यदभिव्यङ्ग्यं भवति, तन्न नियताभिव्यञ्जकापेक्षम् यथा- प्रदीपमणिरत्ननक्षत्राद्यनेकाभिव्यङ्ग्यो घटादिरिति तेषां तृतीयः पर्यनुयोगः ।

चतुर्थः आक्षेपः -

अतश्च ध्वनिभिः कण्ठताल्वाद्यभिघातैः वा शब्दाभिव्यक्तिर्न शक्यते अभ्युपगन्तुम्। यतः अभिव्यक्तिवादिभिः शब्दे अभिव्यञ्जकध्वनिधर्मा-

---

1- ननु यदभिव्यङ्ग्यं भवति, न तन्नियताभिव्यञ्जकमपेक्षते। यथा घटादयो मणिप्रदीपौषधिगृहनक्षत्रैः सर्वैरेवाभिव्यज्यन्ते- वा०प० 1/97 अम्बाकर्त्र्याम् ।

2- शब्दास्तु नैवम्, ते हि नियतान् नादान् स्वाभिव्यञ्जकत्वेनापेक्षन्ते इति नाभिव्यङ्ग्याः, वा०प० 1/97

भासः स्वीक्रियते। अभिव्यक्तस्य ध्वनेः अल्पत्वमहत्त्वाभ्यां शब्दे अल्पत्व-महत्त्वे प्रतीयेते, एवम् कत्वादिवैजात्यान्यपि अभिव्यञ्जकध्वनिगतान्येव शब्दे आरोप्यन्ते, शब्दस्तु एक एव इति तेषाम् सिद्धान्तः। एवम्- स्थिते शब्दे अभिव्यञ्जकध्वनिधर्मानन्वयदर्शनात् शब्दस्य ध्वन्यभिव्यङ्ग्यत्वम् अनुपपद्यते। नहि लोके प्रदीपप्रकाशाद्यभिव्यङ्ग्ये घटादौ अभिव्यञ्जकधर्माभासः क्वचिदनुभवसिद्धः। नापि अभिव्यञ्जकसंख्याभेदात् अभिव्यङ्ग्ये क्वचिदपि संख्याभेदो दृश्यते। अनेकैः प्रदीपैः अभिव्यक्तोऽपि घटादौ एकत्वमेव उपलभ्यते, न तु प्रदीपनानात्वात् घटनानात्वम्। शब्दे तु पुनः अभिव्यञ्जकध्वनिसंख्याभेदोऽभ्युपगम्यते। तस्मात् अभिव्यञ्जकध्वनिधर्मानुविधायित्वात् शब्दो नाभिव्यङ्ग्यः, तथा चानुमानप्रयोगः- शब्दो नाभिव्यङ्ग्यः अभिव्यञ्जकधर्मानुविधायित्वात्, यदभिव्यङ्ग्यम् तन्न अभिव्यञ्जकधर्मानुविधायि, यथा- प्रदीपाद्यभिव्यङ्ग्यो घटादिरिति तुरीयः आक्षेपः[2]।

तदेवं नित्यत्वम्, भिन्नदेशस्थत्वम्, नियताभिव्यञ्जकापेक्षत्वम्, व्यञ्जकधर्मानुविधायित्वञ्चेति हेतुचतुष्टयं शब्दस्य अभिव्यङ्ग्यत्वे बाधकतया आपाततः उपस्थाप्यते।

प्रथमाक्षेपनिराकरणम् -

इमे चत्वारोऽपि आक्षेपाः शाब्दिकप्रवरेण वाक्यपदीयकृता

1- तथाहि नादस्य वृद्ध्या शब्द वृद्धिरुपलभ्यते, महान् शब्दः इति। नादाल्पत्वे तु अल्पः शब्द इति- वा०प० 1/99

2- शब्दो नाभिव्यज्यते व्यञ्जकधर्मानुविधायित्वात्, व्यतिरेके घटादिवदिति, वा०प० 1/99 अम्बाकर्त्री

तत्तद्धेतोः आभासत्वप्रदर्शनेन समाहिताः, समर्थितश्च शब्दाभिव्यक्तिवादः । शब्दस्य अभिव्यङ्ग्यत्वे यद् नित्यत्वं बाधकतया उपन्यस्तम् तत् समादधदाह सः –

न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।
आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥[1]

यदनित्यं तदेवान्येन अभिव्यज्यते, न तु नित्यमिति न नियमः, यद्बलेन शब्दस्य नित्यत्वात् अभिव्यङ्ग्यत्वं विखण्ड्यते, अभिव्यङ्ग्यत्वादनित्यत्वं वा साध्यते। यतः शब्दानित्यत्ववादिभिः तार्किकादिभिरपि नित्यायाः अपि जातेः आश्रयभूतया व्यक्त्या अभिव्यक्तिरिष्यते। तथाहि तार्किकादिमते अभिन्नाभिधानप्रत्ययनिमित्ताः गोत्वादिजातयः नित्याः, ताश्च अनुगतसंस्थानविशिष्टभूयोऽवयवदर्शनेन प्रतीयन्ते इति अनुगतसंस्थानविशिष्टाः तज्जात्याश्रयभूताः व्यक्तयः भवन्ति तत्तज्जातीनाम् अभिव्यञ्जकाः। अत एव हि व्यज्यते अनया जातिरिति व्युत्पत्त्या आश्रयस्य व्यक्तिरिति संज्ञा। तदुक्तम् महाभाष्ये आकृतिग्रहणा जातिः।[2] अनुगतावयवा संस्थानव्यङ्ग्या जातिरिति तदर्थः । नन्वेवम् जातेः व्यक्त्याभिव्यङ्ग्यत्वे पूर्वं व्यक्तिज्ञानं ततो जातिज्ञानमिति प्राप्नोति। परम् नैतद् युज्यते, यतः गौरयम् इत्यादि

---

1- वाक्यपदीयम्- 2/95

2- व्याकरणमहाभाष्यम् ।

व्यक्तिज्ञाने विशेषणतया जातिर्भासते, गोत्वविशिष्टोऽयमिति हि तदर्थः, विशिष्टबुद्धौ च विशेषणज्ञानम् कारणमिति पूर्वं जातिज्ञानमावश्यकम् । तत्कथम् व्यक्त्या जातेरभिव्यक्तिरिति चेत्, अत्रोच्यते पूर्वमनुगतावयवसंस्थानविशिष्टा जात्यसंस्पृष्टा भूयोऽवयवात्मिका, अवयवसंघातात्मिका वा व्यक्तिः भासते, तया च जातिरभिव्यज्यते, ततः गौरयमिति जातिविशिष्टायाः व्यक्तेः भानम् । एवञ्च तार्किकदृष्ट्या ज्ञानमिदं तृतीयसोपानगतम् न तु प्राथमिकम् । इत्थञ्च नित्यानामपि जातीनाम् व्यक्तिभिरभिव्यक्तेः दर्शनात् अभिव्यक्तिः न अनित्यत्वेन व्याप्ता। यदनित्यं तदेवाभिव्यज्यते, यदभिव्यज्यते तदनित्यमिति न व्याप्तिः । अतः प्रकृते शब्दस्य नित्यत्वमभिव्यङ्ग्यत्वे, अभिव्यङ्ग्यत्वं वा नित्यत्वे न बाधकम्। एवञ्च अनेन शब्दो नाभिव्यङ्ग्यः नित्यत्वात् इत्येतस्य अभिव्यङ्ग्यत्वबाधकस्य, शब्दोऽनित्यः अभिव्यङ्ग्यत्वात् इत्येतस्य अनित्यत्वसाधकस्य चानुमानस्य अनैकान्तिकता दर्शिता उक्ताकारिकया वाक्यपदीयकृता।

द्वितीयाक्षेपनिराकरणम्-

भिन्नदेशस्थत्वात् शब्दस्य ध्वनिव्यङ्ग्यत्वं न संभवति इति यदाक्षिप्तं तदपि देशभेदानङ्गीकारेण प्रत्याचष्टे वाक्यपदीयकारः -

देशादिभिश्च सम्बन्धो दृष्टः कायवतामपि ।
देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः ।।

---

1- वाक्यपदीयम् 1/96

मूर्तानामेव पदार्थानां देशसम्बन्धः शक्यते वक्तुम्। एकदेशस्थत्वम् भिन्नदेशस्थत्व चेति मूर्तेष्वेव शक्यते व्यवहर्तुम् यथा- व्यङ्ग्यव्यञ्जकभूताः प्रदीपघटादयः मूर्ताः, अतो भवन्ति एकदेशस्थाः, भिन्नदेशस्थाश्च। परन्तु ध्वनिः शब्दश्चेत्युभयमपि अमूर्तम्, अमूर्तत्वात् न देशसम्बन्धः, अत एव न देशभेदोऽपि। यत्तु गृहीतं कर्णे शब्दः, रथ्यायां शब्दः इति शब्दस्य देशविशेषसम्बन्धव्यवहारः स औपाधिकः न वास्तवः। तदाह- " देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः" ध्वनिशब्दयोः काल्पनिकदेशभेदेऽपि न वास्तवो देशभेदः अमूर्तत्वात् इति एतदर्थः।[1] द्रव्यशब्दवादेऽपि यद्यपि शब्दस्य देशसम्बन्धः शक्यते वक्तुम्, तथापि न ध्वनिः शब्दात् भिन्नदेशस्थ यतः, आकाशमेव शब्दस्य देशः, तच्चैकम्। न्यायनयेऽपि शब्दः आकाशस्य गुणः।[3] ध्वनिरपि च कण्ठताल्वादिततत्स्थानकरणावच्छिन्ने श्रोत्रावच्छिन्ने वा आकाशे उत्पद्यते इत्याकाशस्यैकदेशस्थत्वमेव व्यङ्ग्यव्यञ्जकयोः ध्वनिशब्दयोः। एवञ्च देशभेदस्यैव अभावात्, देशभेदात् शब्दस्याभिव्यङ्ग्यत्वम् असम्यक्खण्डनम्। तदित्थं शब्दो नाभिव्यङ्ग्यः, अभिव्यञ्जकदेशभिन्नदेशस्थत्वादिति एतस्मिन् प्रतिवादयुक्ते अनुमाने, भिन्नदेशस्थत्वरूपहेतोः स्वरूपासिद्धिः द्रष्टव्या।

तृतीयाक्षेपनिराकरणम्-

नियताभिव्यञ्जकापेक्षत्वात् शब्दो नाभिव्यङ्ग्यः इति तृतीया-

---

1- वाक्यपदीयम् - 1/96

2- श्रोत्रोपलब्धिः बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशः शब्दः व्याकरणमहाभाष्यम् - अ इ उ ण् सूत्रे।

3- आकाशस्य तु गुणः शब्दः- न्यायमंजरी- भाग-2 पृ0 56

क्षेपमपि क्वचिद् अभिव्यङ्ग्यस्यनियताभिव्यञ्जकापेक्षत्वप्रदर्शनेन समाधत्ते हरिः –

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ॥[1]

तत्तदिन्द्रियवर्तिनस्ते ते गुणाः विषयगतान् तान्तान् गुणान्, क्वचित्तदाश्रयद्रव्याणि अभिव्यञ्जन्ति इति सिद्धान्तः । अत एव तत्तदिन्द्रियं, तान् तान् एव गुणान् तदाश्रयं द्रव्यं वा गृह्णाति। यथा- घ्राणेन्द्रियं गन्धमेव गृह्णाति, यतः घ्राणेन्द्रियसमवेतो गन्ध एव विषयगतं गन्धमेवाभिव्यनक्ति, न गुणान्तरं गन्धाश्रयं द्रव्यं वा, एवम् चक्षुस्समवेतं रूपं चक्षुस्संयुक्तं विषयगतं रूपमेव अभिव्यनक्ति, तदाश्रयं द्रव्यञ्चापि, न तु रूपसहचारिणम् अपि गन्धादिगुणम् । अतः चक्षूरूपमेव गृह्णाति न तु गन्धादीन् गुणान् इति वस्तुस्थितिः । एवञ्च विषयेन्द्रियस्थले चक्षुर्गतं रूपमेव चक्षुस्संयुक्तविषयगतम् रूपमेवाभिव्यनक्ति, न तु गुणान्तराणि, नापि इन्द्रियान्तर्गतं रूपम्, इन्द्रियार्गतानि वा गुणान्तराणि संयुक्तविषयगतं रूपमभिव्यञ्जन्ति। तथासति इन्द्रियान्तरेणापि रूपस्य, चक्षुषापि च गन्धादीनां ग्रहणप्रसङ्गः । इत्थञ्च इदमेव एतस्यैव अभिव्यञ्जकमिति इन्द्रिय-विषयस्थले अभिव्यङ्ग्यस्य रूपादेः नियताभिव्यञ्जकापेक्षा दृष्टा। क्वचिन् मा दृश्यताम् अभिव्यङ्ग्यस्य नियताभिव्यञ्जकापेक्षा, यथा- प्रदीपाद्यभिव्यङ्ग्ये घटादौ। परम् न तावता अभिव्यङ्ग्यं नियताभिव्यञ्जकापेक्षं न भवतीति नियमः

---

1- वाक्यपदीयम् - 1/97

0

शक्यते वक्तुम्, दर्शितस्थले उक्तनियमस्य विखण्डनात् । एवञ्च यथा ग्रहणग्राह्ययोः इन्द्रियगतगुणविषयगतगुणयोः व्यङ्ग्यव्यञ्जकभावेन अयमेव अस्यैवाभिव्यञ्जकः इति योग्यतानियमः । एवम् ध्वनिशब्दयोरपि नियमव्यञ्जकापेक्षो व्यङ्ग्यव्यञ्जकभावः। अतो नियतव्यञ्जकापेक्षत्वेन शब्दस्य अभिव्यङ्ग्यत्वम् अशक्यनिरसनम् । तदित्थं शब्दो नाभिव्यङ्ग्यः, नियताभिव्यञ्जकापेक्षत्वात् इत्यनुमाने अनेकान्तता द्रष्टव्या।

चतुर्थाक्षेप -निराकरणम् -

यदपि अभिव्यञ्जकध्वनिधर्मानन्वयात् शब्दो नाभिव्यङ्ग्यः इति, तदपि हेतोरनेकान्तत्वप्रदर्शनेन निराचष्टे वाक्यपदीयकारः -

प्रकाशकानां भेदांश्च प्रकाश्योऽनुवर्तते ।

तैलोदकादिभेदे तत् प्रत्यक्षं प्रतिबिम्बके ।।[1]

अभिव्यङ्ग्यस्य अभिव्यञ्जकधर्मानन्वयोऽपि लोके दृश्यते। तद् यथा - निम्नेषु आदर्शतलादिषु मुखप्रतिबिम्बमुन्नतं दृश्यते, उन्नतेषु च निम्नम् । खड्गे दीर्घम्, प्रियङ्गुतैले श्यामम्[2] । एवमभिव्यङ्ग्यानां सूर्यादिप्रतिबिम्बानाम् आदर्शभेदेन,जलतरङ्गादिभेदेन च संख्याभेदोऽपि दृश्यते। एकमेव सूर्यादिप्रतिबिम्बं युगपदनेकेषु आदर्शजलतरङ्गादिषु अभिव्यक्तम् सत् अनेकतया गृह्यते[3] ।

---------------

1- वाक्यपदीयम् 1/99

2- वाक्यपदीयम् 1/99 हरिवृत्तौ ।

3- वाक्यपदीयम् - तदेव

एवमेकमेव मुखादिप्रतिबिम्बम् आदर्शमणिकृपाणजलादिषु अनेकेषु अभिव्यञ्जकेषु अभिव्यक्तम् अनेकतया दीर्घत्ववर्तुलत्वाणुत्वमहत्त्वाद्यनेकविरुद्धधर्मवत्तया च गृह्यते।[1] अत्र सर्वत्र आदर्शादयः मुखादेरभिव्यञ्जका इति अभिव्यङ्ग्ये मुखादौ अभिव्यञ्जकधर्मभेदानुविधानम्, अभिव्यञ्जकधर्मानुविधानञ्च दृष्टम् । एवम्प्रकृतेऽपि एक एव शब्दः तत्तद्ध्वन्यभिव्यक्तः अभिव्यञ्जकध्वनिभेदात् अनेक इव, अभिव्यञ्जकध्वनिधर्मानुविधानात् अनेकधर्मवान् इव च प्रतीयते इति न शब्दस्य अभिव्यङ्ग्यत्वे अभिव्यञ्जकधर्मानुविधानं बाधकम् । एवञ्च प्रदीपाद्यभिव्यङ्ग्ये घटादौ प्रदीपादिरूपव्यञ्जकधर्मानवभासे अपि प्रदीपादिभेदात् भेदानवभासेऽपि च आदर्शमणिकृपाणाद्यभिव्यक्ते मुखादिप्रतिबिम्बे अभिव्यञ्जकधर्मविभासस्य अभिव्यञ्जकभेदात् भेदावभासस्य चापि दर्शनात् प्रकृते प्रतिबिम्बन्यायेनैव एकस्मिन्नेव शब्दे अभिव्यञ्जक - ध्वनिधर्मविभासः, ध्वनिभेदाद् भेदावभासश्च द्रष्टव्यः ।[2] तदेवं शब्दस्याभिव्यङ्ग्यत्वे अभिव्यञ्जकधर्मानुविधानरूपो यो हेतुः बाधकतया उपन्यस्तः, सः प्रतिबिम्बस्थले अनेकान्तः ।

ननु प्रतिबिम्बम् बिम्बादनतिरिक्तम् भवति इतिदर्शने बिम्बस्य एकत्वेन, एकरूपत्वेन च प्रतिबिम्बे प्रतीयमानः संख्याभेदः दीर्घत्ववर्तुलत्वादि-

---

1- दृश्यते हि यवनाकाल्पनाभिन्न अणुमहद्वीक्षणकाये स्वल्पपरिमाणापि पिपीलिका गजप्रमाणेत्येवम् अस्त्यभिव्यङ्ग्यानाम् अभिव्यञ्जकधर्मग्रहणे तद्भिन्नधर्मग्रहणे परिमाणभेदग्रहणे चानन्तो विकल्पः, वा०प० 1/99 अम्बकर्त्रीयाम्।

2- तथा एकोऽपि स्फोटस्तथा शब्दः व्यञ्जकनादानुविधानेन बहुधानुभूयते इति स्फोटस्याभिव्यङ्ग्यत्वं प्रतिबिम्बन्यायेनैवेति, वा०प० 1/99

धर्मभेदश्च, अभिव्यञ्जकसम्बन्धात् अभिव्यञ्जकभेदाद् वा आरोपितः इति अभिव्यङ्ग्यस्य प्रतिबिम्बस्य अभिव्यञ्जकधर्मानुविधानं निदर्शयितुं शक्यते। तेन च अभिव्यञ्जकधर्मानुविधानरूपस्य अभिव्यङ्ग्यत्वाभावसाधकस्य हेतोः अनैकान्तत्वम् शक्यते साधयितुम्, परन्तु नैषा वस्तुस्थितिः । प्रतिबिम्बं हि बिम्बादतिरिक्तमेव। आदर्शमणिकृपाणादिषु विभिन्नेषु अभिव्यञ्जकेषु बिम्बात्मकात् मुखादेः अतिरिक्तान्येव प्रातिभासिकानि व्यावहारिकाणि वा मुखादिप्रतिबिम्बानि उत्पद्यन्ते।[1] तानि च परस्परस्मात् स्वत एव भिन्नानि, न तु अभिव्यञ्जकभेदात् तत्र भेद आरोपितः । एवम् स्वत एव दीर्घत्ववर्तुलत्वादितत्तद्धर्मवन्ति, दीर्घत्ववर्तुलत्वादयो धर्माः तेषां प्रतिबिम्बानां स्वाभाविका एव न तु अभिव्यञ्जकगताः तत्राभासन्ते। यदि तु प्रतिबिम्बं बिम्बादनतिरिक्तम्, बिम्बस्य च एकत्वात् प्रतिबिम्बमपि एकमेव अनेकैः आदर्शादिभिः अभिव्यज्यते इति स्वीक्रियेत, तदा अभिव्यङ्ग्ये अभिव्यञ्जकधर्मावभासः अभिव्यञ्जकभेदाद्भेदाध्यासः भवेत् शक्यनिदर्शनः, परं नैवं स्वीक्रियते। तदेवम् अभिव्यङ्ग्ये क्वापि अभिव्यञ्जकधर्मानुविधानस्य अदर्शनात् शब्दस्य अभिव्यङ्ग्यत्वमसंभवि इत्ययमाक्षेपः तदवस्थ एव इति चेत्- समाधत्ते वाक्यपदीयकारः स्वयमेव -

विरुद्धपरिमाणेषु वज्रादर्शतलादिषु ।
पर्वतादिसरूपाणां भावानां नास्ति संभवः ।।[2]

---

1- वस्तुतस्तु बिम्बोपादानकं बिम्बसमसत्ताकम्, तत्तदुपाधिनिमित्तकं तत्तदुपाधिपरिमाणानुरूपपरिमाणं बिम्बोपाध्योः सम्बद्ध प्रतिबिम्बनामकं किमपि वस्तु समुत्पद्यते- वा०प० 1/100

2- वाक्यपदीयम् - 1/100.

बिम्बात् पृथक् अपूर्वाणां प्रतिबिम्बानाम् आदर्शादिषु अभिव्यञ्जकेषु उत्पत्तिः, स्वीकर्तुं न युज्यते, यतः बिम्बपरिणामापेक्षया विरूद्धपरिमाणेषु बिम्बपरिमाणात् अत्यल्पपरिमाणेषु वज्रादर्शतलादिषु महापरिमाणानाम् वज्रादर्शादिपरिमाणात् अधिकपरिमाणानां वा गृहवृक्षपर्वतादिप्रतिबिम्बानाम् उत्पत्तिः स्थितिश्च न संभवति। नहि अल्पपरिमाणे आश्रये अधिकपरिमाणं वस्तु मातुं शक्नोति। अभिव्यज्यन्ते च अल्पपरिमाणैरपि आदर्शादिभिः अधिकपरिमाणानि अधिकपरिमाणतया गृह्यमाणानि वा गृहवृक्षादिप्रतिबिम्बानि। तस्मात् बिम्बादतिरिक्तानां विभिन्नानाम् अपूर्वाणां प्रतिबिम्बानाम् आदर्शादिषु उत्पत्तिर्नसंभवति, अपितु बिम्बमेव आदर्शादिभिः अभिव्यज्यते, अभिव्यज्यमानं च प्रतिबिम्बमिति उच्यते[1] इति बिम्बादनतिरिक्तमेव प्रतिबिम्बम्, ततश्च विषयस्य एकत्वात्, एकरूपत्वात् प्रतिबिम्बस्यापि एकत्वे, एकरूपत्वेऽपि च प्रतिबिम्बे प्रतीयमानः संख्याभेदः, दीर्घवर्तुलत्वादिरूपभेदश्च आरोपित एवेति ईदृशस्थले अभिव्यङ्ग्यस्य अभिव्यञ्जकधर्मानुविधानम् अभ्युपगन्तव्यमेव। एतद्रीत्यैव च शब्देऽपि ध्वनिधर्माध्यासः।

" ध्वनिस्फोटविषये दर्शनान्तराणि "

एतावता कण्ठताल्वाद्यभिघातजन्याः नादाः एव ध्वनयः, स्फोटाख्यः शब्दस्तु तदभिव्यङ्ग्यः एको, नित्यो, विभुः, सर्वथा विक्रियारहितः, अखण्डः,

---

1- अत एव इदानीं केमरायन्त्रेण प्रतिबिम्बं गृह्यते, टेलीविजनयन्त्रसाहाय्येन च प्रतिबिम्बमन्यत्र गच्छति। पा०प० 1/100 अम्बकर्त्र्यपि।

सवार्थशक्तिमान् चेति शाब्दिकसिद्धान्तो व्यङ्ग्यस्य स्फोटस्य व्यञ्जकानां ध्वनीनाञ्च सविस्तरेण वर्णनेन व्यवस्थापितः । उक्तविधस्य शब्दतत्त्वस्य एकत्वे, नित्यत्वे, अखण्डत्वे, सवार्थशक्तिमत्त्वेऽपि च शब्दभेदार्थभेदादिविषयकाः सर्वाः व्यावहारिक्यो व्यवस्थाः यथा निर्वहन्ति तथोपपादितम् बहुशः प्राक् ।

ध्वनिस्फोटयोः जातिव्यक्तिभावः -

सम्प्रति ध्वनिस्फोटयोः निर्वचनविषयिकाणि दर्शनान्तराणि उपस्थाप्यन्ते । यतः केचन ध्वनिस्फोटौ अन्यथा व्याचख्यौ । तथाहि दर्शनमिदं केषाञ्चित् यत् तत्तद्वर्णपदवाक्यरूपाः विभिन्नाः, प्रत्युच्चारणे भिद्यमानाः शब्दव्यक्तयः एव ध्वनयः, ध्वनिशब्दव्यपदेश्याः इति यावत् । तत्तद्वर्णपदाद्यपेक्षव्यक्तिनिष्ठाः, तत्तद्वर्णपदादिव्यङ्ग्याः तत्तत्पदत्वादिरूपाः नित्याः जातय एव स्फोटपदव्यपदेश्याः । अयमाशयः - कण्ठताल्वाद्यभिघातजन्यध्वनिरूपाण्येव, वर्णपदवाक्यानि । सः सः ध्वनिः वर्णः, तत्तद्वर्णसमूहः पदम्, तत्तत्पदसमूहश्च वाक्यमिति सर्वमेतद् ध्वन्यात्मकमेव । ध्वनीनां जन्यत्वेन तदात्मकानि वर्णपदवाक्यान्यपि अनित्यानि, प्रत्युच्चारणभिद्यमानत्वाच्च अनेकव्यक्तिरूपाणि । यथा- घटाद्यर्थव्यक्तयः अनेकाः, एवम् घटपटादितत्तत्पदव्यक्तयोऽपि अनेकाः इतिरीत्या अनेकत्वं द्रष्टव्यम् । परन्तु अर्थवाचकता न तत्तत्पदादिव्यक्तिनिष्ठा अपितु तत्तत्पदत्वादिजातिनिष्ठा

1- वर्णवाक्यरूपा व्यक्तय एव ध्वनयो विशिष्टप्रयत्नस्थानकरणाभिघातजाताः, वा०प० 1/93

2- वर्णपदवाक्यगताः जातयस्तु वर्णादिषु प्रत्येकमेकाः स्फोटरूपाः स्वाश्रयैः व्यक्तिभिरभिव्यज्यन्ते इति, वाक्यपदीयम् 1/93, अम्बाकर्त्र्याम् ।

एव। यतः वर्णात्मकध्वनिसमूहः एव पदम्, वर्णाश्च उच्चरितप्रध्वंसिनः, अतः क्रमिकोत्पत्तिकानां वर्णानां युगपदवस्थानासंभवेन, तत्तत्समूहरूपम् पदादिकम् न वस्तुतः सत् । अतो वर्णसमूहरूपाणां पदादीनां वाचकत्वं शक्त्याश्रयत्वं वा न संभवति इति तत्तत्पदादिगतानां जातीनाम् एव वाचकत्वम्। यथा जाति-शक्तिवादे अर्थगताः जातय एव वाच्याः न तु तत्तदर्थव्यक्तयः । एवम् शब्दगताः तत्तत्पदत्वादिजातय एव वाचिकाः न तु ध्वनिसमूहरूपाः तत्तत्पदादिव्यक्तयः। व्यक्तयस्तु तत्तज्जातीनां व्यञ्जिकाः । घटपटादितत्तत्पदादिव्यक्तिश्रवणे घटपटत्वादिरूपा सा सा जातिः व्यज्यते, तथा चार्थधीः । एवञ्च पदम् , पदश्रवणं वा तत्तज्जातिव्यञ्जनद्वारेण अर्थबोधे उपयुज्यते न तु साक्षात् तत्तज्जात्यभिव्यञ्जनमेव पदादिव्यक्तीनां कार्यमिति यावत्। यथा शाब्दिकसिद्धान्ते श्रूयमाणाः ध्वनयः तद्व्यतिरिक्तस्य स्फोटात्मकस्य पूर्वोक्त-विधस्य शब्दस्य अभिव्यञ्जका एव, न तु अर्थस्य वाचकाः । अर्थस्य वाचकं तु तैरभिव्यक्तं शब्दतत्त्वम्, एवमेव अत्रापि गतिः । तत्र याः तत्तत्पदत्वादिजाती-नामाश्रयभूताः अभिव्यञ्जिकाश्च तत्तद्वर्णपदवाक्यव्यक्तयः ता एव ध्वनयः इत्युच्यन्ते। तदभिव्यङ्ग्या घटपदत्वादिरूपा जातिः स्फोट इति व्यवदिश्यते। व्यक्तिव्यङ्ग्यत्वात् अर्थवाचकत्वाच्चजातेः स्फोटत्वम् । स्फुटयते= अभिव्यज्यते इति स्फुटति अर्थोऽस्मादिति स्फोटशब्दस्य दर्शितम् व्युत्पत्तिद्वयमपि उक्तविधायां जातौ संघटते। दर्शनमिदं वाक्यपदीयकृता इत्थं वर्णितम् –

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।

कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ।।[1]

कारिकेयं हरिणा स्वयमेवेत्थं व्याख्याता–

आकृतिनित्यत्वाच्छब्दनित्यत्वं केचिद् आचक्षाणाः "उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति " इत्येवमादिषु स्फोटशब्दवाच्यां शब्दत्वादन्याम् क्रमजन्मभिरयुगपत्कालैराश्रयैः क्रमेण प्रकल्पितोपग्रहनिमित्तसंस्कारां शब्दाकृतिमाचक्षते। उत्पत्तिमत्यस्तु शब्दव्यक्तयः सत्यव्यपदेश्यरूपत्वे स्फोटं व्यपदेश्यरूपमवधोतयन्त्यो ध्वनिव्यपदेशं लभन्ते ।[2]

"दर्शनमिदम् उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति, "इत्यनेन भाष्येणापि संकेतितम्[3] अत्र हि भाष्ये स्फोटपदं रत्वलत्वादिजात्यभिप्रायेणैव प्रयुक्तमस्ति ।

शब्दजशब्दन्यायेन ध्वनिस्फोटयोः व्याख्यानम् –
---------------------------------

ध्वनिस्फोटविषये अन्येषां केषांचिदिदं दर्शनम् यत् कण्ठताल्वाद्यभिघात-जन्यः प्राथमिकः शब्दः स्फोटव्यपदेश्यः, वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा उत्तरोत्तरं जायमानाः पूर्वपूर्वशब्दजा इति यावद् शब्दाः ध्वनिपदव्यपदेश्याः

----------------

1– वाक्यपदीयम् 1/93

2– वाक्यपदीय 1/93 स्वोपज्ञवृत्तौ

3– ए॰ओ॰इ॰सूत्रे महाभाष्यम् । भ॰ सू॰– 3

अयं हि एतद्वादिनां सिद्धान्तः यत् कण्ठताल्वाद्यभिघातैः प्रथममुच्चारणदेशे शब्दो जन्यते तत्रैव च सः क्षणानन्तरं विनाशमायाति, परन्तु सः विनश्यन् वीचीतरङ्गन्यायेन स्वोत्तरदेशे स्वसजातीयमेव शब्दं जनयति, सोऽपि च क्षणानन्तरं विनश्यति, विनश्यन्नुक्तरीत्यैव शब्दान्तरं जनयति। एवम् क्रमेण शब्दपरम्परा प्रचलति या परितः बाह्यं प्रदेशं व्याप्नोति। अयमेव वीचीतरङ्गन्यायेन शब्दप्रसारवादः शब्दजशब्दन्यायो वा[1]। एतद्दर्शनानुसारेण न शब्दो विभुः न वा सक्रियः न हि यः शब्दः वक्तृदेशे उच्चारणेन उत्पाद्यते स एव श्रोतृदेशगतः श्रोत्रा गृह्यते, अपितु उक्तन्यायेन श्रोतृदेशे अन्या एव शब्दव्यक्तिरुत्पद्यते। लाघवातिशयमहिम्ना चायं व्यक्तिभेदो न गृह्यते। एवम् स्थिते कण्ठताल्वाद्यभिघातैः साक्षात् जायमाना प्राथमिकी या शब्दव्यक्तिः सः स्फोटः, तदुत्तरमनुवर्तमानाः द्वितीयादयः अनुरणनात्मकाः शब्दव्यक्तयो ध्वनयः। दर्शनमिदं वाक्यपदीये इत्थं वर्णितम् -

> यः संयोगविभागाभ्यां करणैरुपजन्यते।
> सः स्फोटः शब्दजाः शब्दाः ध्वनयोऽन्यैरुदाहृताः ॥[2]

-----------------

1- तस्मात्तु स्थानकरणसंयोगविभागजाताच्छब्दात् तद्रूपप्रतिबिम्बोपग्राहिणो दशदिग्व्यापिनः कदम्बकोरकवद् वीचिसन्तानवच्च जायमानाः शब्दाः दशदिगवस्थितानां श्रोतृणां श्रोत्रदेशमुपगच्छन्ति। 1/102 अम्बाकर्त्रयाम्।

2- वाक्यपदीय- 1/102

## उक्तपक्षयोः शाब्दिकसिद्धान्तेन समीक्षा–

अस्मिन् दर्शने ध्वनिस्फोटश्चेत्युभयमपि अनित्यमेव । इयानेव तु विशेषः यदुच्चारणदेशे प्रथममुत्पद्यमानः शब्दः स्फोटः तज्जन्या परितः प्रसरन्ती शब्दसन्ततिः ध्वनिरिति[1] । प्राग्दर्शिते जातिस्फोटवादे तु स्फोटस्य तत्तत्पदत्वादिजात्यात्मकत्वात् स्फोटो नित्यः, जातिर्हि नित्या, अतः जातिस्फोटवादिनां दर्शनम् शब्दजशब्दवादिनां दर्शनापेक्षया शाब्दिकसिद्धान्तस्य निकटवर्ति, परन्तु एतदपि शाब्दिकसिद्धान्तं पूर्णतया न संवदति, नापि अतीवाभ्युपगमम् अर्हति। यतः उच्चरितप्रध्वंसिनां ध्वन्यात्मकानां वर्णानां वाचकत्वे या अनुपपत्तिः सा तत्तद्वर्णपदादिव्यङ्ग्यानां तदाश्रितानां वाचकत्वेऽपि तदवस्थैव, यतः अस्मिन् ध्वनिस्फोटयोः व्यक्तिजातिभावादे जात्यात्मकस्य स्फोटस्य व्यक्त्यात्मकध्वन्याश्रितत्वं वाच्यम्। जातिव्यक्त्योर्हि व्यङ्ग्यव्यञ्जकभावेन सह आश्रयाश्रयिभावोऽपि भवति। जातिर्हि व्यक्त्याश्रिता सती व्यक्त्या अभिव्यज्यते। एवं स्थिते पूर्वोक्तरीत्या क्रमिकोत्पत्तिकतत्तद्वर्णसमूहरूपाणां पदानां वाक्यानाञ्च वस्तुतो सत्त्वेन तत्र तत्तत्पदत्वादिरूपाः जातयोऽपि स्वीकर्तुं न युज्यन्ते। नहि निराश्रया जातिर्भवति। पूर्वपूर्ववर्णानुभवजनितसंस्कारसधीचीनेन चरमवर्णानुभवजन्यसंस्कारेण तावद्वर्णानाम्

---

1– अनित्यपक्षे स्थानकरणप्राप्तिविभागहेतुकः प्रथमाभिनिर्वृत्तो यः शब्दः सः स्फोटः ––––– मन्दप्रदीपप्रकाशितरूपकल्पाः क्रमेण प्रध्वंसमाना ये वर्णश्रुतिं विभजन्ति। ते ध्वनय इत्युच्यन्ते। 1/102 स्वोपज्ञवृत्तौ।

युगपत्स्मरणाद्, गोकारेण कथञ्चित पदादिज्ञानस्य उपपादनेऽपि एकज्ञान-विषयतया इदमेकं पदमित्यादिव्यवहारस्य उपपादनेऽपि च पदानां वस्तुतो विद्यमानत्वेन जात्याश्रयत्वोपपादनं तत्र जातिकल्पनं वा असंभवि ।

शाब्दिकमतम् –

शाब्दिकसिद्धान्ते तु तत्तद्वर्णात्मकध्वनिव्यङ्ग्यम् अतिरिक्तमेव एकं शब्दतत्त्वं स्फोटाख्यमर्थवाचकम्, ध्वनिसमूहरूपाणि पदानि तु तद्व्यञ्जकान्येव, न तु आश्रयभूतान्यपि। ध्वनिस्फोटयोः व्यङ्ग्यव्यञ्जकभाव एव न तु आश्रयाश्रयिभावोऽपि, अतः तत्तद्ध्वनिसमूहरूपाणां पदादीनां वस्तुतो सत्त्वेऽपि स्फोटस्यावस्थानम् निर्बाधम् । व्यञ्जकत्वन्तु तेषां यथा भवति तथा प्रागुपपादितम् । अपि च उपर्युक्तजातिस्फोटवादे तत्तत्पदत्वादिरूपाः अनेकाः जातयः वाचिकाः इति स्फोटानेकत्वम् शाब्दिकसिद्धान्ते पुनः एकमेव स्फोटाख्यं शब्दतत्त्वम् सर्वार्थशक्तिमत् सर्वविधैरपि ध्वनिभिः ध्वनिसमूहैः वा अभिव्यञ्जकध्वनिरूपरूषितमभिव्यज्यते। एवञ्च केवलं रूपभेद एव न तु वस्तुभेदः, सोऽपि च स्फोटे आरोपितः न वास्तवः। आरोपितरूपभेदेनैव चार्थभेदव्यस्था। तदेतदाह हरिः

> अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।
> उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ।।

---

1– "अन्ये त्वाकृतिव्यक्तिव्यवहारप्रक्रियावैधर्म्यादिकमेव शब्दतत्त्वम् नित्यमलब्धपरिणामं स्वनिमित्तेभ्यः प्राप्तविकारैः ध्वनिभिरनाश्रितं ध्वनिषु प्रदीपादिप्रकाशन्यायेनासति वस्तुसंप्रमोहे प्राप्तव्य जकध्वनिविक्रियानुरागमुपलब्धरूपमिवाभिव्यज्यते इत्याहुः। वाक्यपदीय– 1/94

## शब्दस्य तत्त्वमीमांसीयसमीक्षा

सृष्ट्युपादानविषये दर्शनान्तरीया धारणा:

नामरूपात्मकस्य निखिलस्यास्य जगत: एकस्मादुपादानात् प्रभवमिच्छन्ति समेऽपि आस्तिका: दार्शनिका:। अन्यदिदंयत् किं तदुपादानं कथञ्च तस्मात्प्रभव: कीदृशो वा ? इत्येतद् विषये प्रचुरं मतवैविभन्यमेतेषाम् । तद् यथा-

न्यायवैशेषिकमतम्-

केचित् पृथिव्यप्तेजोवायूनां सूक्ष्मतमावयवरूपान् परमाणून् एव सृष्टेरारम्भकान् मन्यन्ते।

सांख्यमतम्-

अपरे प्रधानापरपर्यायं त्रिगुणात्मकं[2] प्रकृत्याख्यम्[3] अचिद्रूपं तत्त्वमेव निखिलस्य कार्यजातस्य उपादानतया समाश्रयन्ते।

वेदान्तिमतम्-

इतरे पुन: चित्स्वभावं मायाशबलितं प्रकृतिशरीरकं वा ब्रह्मतत्त्वम् अखिलस्यापि विश्वप्रपञ्चस्य उपादानतया आतिष्ठन्ते। ब्रह्मकारणतावादिनामेषामपि मुख्यतया द्वौ गति:- एका अद्वैतिनाम् अपरा च विशिष्टाद्वैतिनाम् ।

अद्वैतविशिष्टाद्वैतयो: विशेष:

अद्वैतातिनस्तावद् मायोपहितम् ईश्वराभिधं ब्रह्म जगत: उपादानं निमित्तंचापि मन्वते। तत्र ब्रह्मण: निमित्तता स्वप्रधानतया,उपादानता तु सोपाधि-

---

1-

2- अजामेकां लाहितशुक्लकृष्णाम् । श्वे0304/5,सा0का0

3- गुणानां साम्यवस्थैा प्रकृति:। सा0प्र0भाष्य- 4- मूलप्रकृति--। सा0का03

भूतमायाप्रधानतया। एकस्यैव निमित्तत्वोपादानत्वयोः व्यवस्थापने ते लूतां दृष्टान्तत्वेन उपन्यस्यन्ति। लूता स्वप्रधानतया (स्वात्मना) तन्तुजालं प्रति निमित्तकारणम्, स्वशरीरप्रधानतया (शरीरात्मना) उपादानम् (समवायिकारणम्) च भवति।[1] एवम् इहापि ब्रह्मणः अभिन्ननिमित्तोपादानता।[2] अन्यच्च एतेषां सिद्धान्ते ब्रह्मणः या प्रपञ्चं प्रति निमित्तोपादानता कारणता वा, सा न जनकतारूपा अपितु विवर्ताधिष्ठानता आभासाधिष्ठानता वा। एवञ्च ब्रह्मजगतोः न वस्तुतः कार्यकारणभावः अपितु अधिष्ठानाधिष्ठेयभावः।[3] अतः ब्रह्मणः सत्यत्वेऽपि जगतः मिथ्यात्वं न विरूध्यते। वस्तुतः कार्यकारणभावे तु कार्यकारणयोरभेदात् कारणस्य सत्यत्वे कार्येणापि सत्येन भवितव्यम्, कार्यस्य मिथ्यात्वे वा कारणेनापि मिथ्याभूतेन भाव्यम्।[4] विशिष्टाद्वैतिनस्तु प्रकृतिशरीरकं ब्रह्म जगतः कारणत्वेनाभ्युपगच्छन्ति। एतेषामपि मते ब्रह्मणः स्वात्मना निमित्तता प्रकृत्यात्मकस्वशरीरात्मना च उपादानता। परन्त्वेतन्मते ब्रह्मजगतोः कार्यकारणभावः वास्तव एव परिणामपरिणामिभावरूप इति यावत्। प्रकृतिरूपस्वशरीरांशेन ब्रह्म जगद्रूपेण परिणमति, प्रकृतेः ब्रह्मशरीरभूतायाः सत्यत्वात् जगतोऽपि सत्यत्वम्। ब्रह्मणः सत्यभूतजगदुपादानत्वेऽपि शरीरपरिणामाङ्गीका-

-------------------

1- यथोर्णनाभिः सृजते गृहणते च यथा पृथिव्यामोषधयो संभवन्ति।
यथा सतः पुरूषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम् ।।
मुण्डकोपनिषत्- 1/1/6

2- प्रकृति प्रतिज्ञादृष्टान्तानुरोधात् । ब्र0सू0- 1/4/23

3- तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम्। ब्र0सू0शा0भा0 1/4/23

4- अनन्यत्वे पि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यत्वमिति। ब्र0सू0शा0भा0 2/1/9

रात् प्रकृतिरूपे ब्रह्मणः शरीरे एव विक्रिया न तु स्वरूपे। अतः कारणत्वेऽपि उपादानत्वेऽपि परिणामित्वेऽपि वा ब्रह्मणः अविकारित्वं न विरूद्ध्यते।[1]

तदेवम् उपादानस्य स्वरूपविषये एतेषां दार्शनिकानां मतवैभिन्यमस्माभिः परिदृष्टम्। प्रपंचप्रक्रियाविषये प्रपंचस्वरूपविषये च यानि एतेषां विभिन्नानि मतानि तानि अस्मिन्नेवाधिकरणे अग्रे आरम्भविपरिणामविवर्तवादानां विश्लेषण-व्याजेन प्रदर्शयिष्यन्ते।

शाब्दिकमते शब्दस्य जगदुपादानता–

अथ जगतो मूलकारणविषये शाब्दिकानां का धारणा कश्च तदीयधारणायां दर्शनान्तरापेक्षया विशेषः इत्यादिकं विमृशामः। एतेषां दर्शने शब्द एव परमं तत्त्वम्।[2] तथाहि शब्दस्य द्वे रूपे– व्यावहारिकं पारमार्थिकञ्च। योऽयं सर्वोऽपि शब्दप्रपञ्च अस्माभिः व्यवह्रियते श्रूयते च, बुद्ध्यते च यस्मादर्थः सा शब्दस्य व्यावहारिकी अवस्था, पारमार्थिकस्य शब्दतत्त्वस्य विवर्तभूता चेयम्। अतोऽन्यत् असंहृतक्रमं नादप्रधानं सूक्ष्मतमनादात्मकं वा वर्णादिदविभागरहितम् एकं विभु नित्यञ्च शब्दाख्यं शब्दब्रह्मेतिगीयमानम् नामरूपात्मिकाया अस्याः सृष्टेः विवर्तोपादानभूतं यत्तत्त्वं तदेव शब्दस्य पारमार्थिकं रूपम्। शब्दस्य इयमेवावस्था

---

1– कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। श्रीभाष्य– 1/1/5

2– क. ओंकार एव सर्वा वाक्, सैषा स्पर्शोष्मभिः व्यज्यमाना बह्वी नानारूपा भवति। ऐतरेय ब्राह्म0– 3/6/7

परावागिति पराशक्तिरिति वा उच्यते। तदुक्तम्–

" स्वरूपज्योतिरेवान्तः परावागनपायिनी "[1]

इदञ्च पारमार्थिकं शब्दतत्त्वम् वेदान्तसम्मत- ब्रह्मतत्त्वस्थानीयम्।[2] इयाँस्तु विशेषः यद् वेदान्तिभिः ब्रह्मणः चिन्मात्ररूपता अभ्युपगम्यते। शाब्दिकैस्तु तस्य शब्दरूपताम् (नादरूपताम्) अपि स्वीकृत्य तदेव " शब्दब्रह्म" इत्युद्घोष्यते। एवञ्च चिद्रूपम् (ज्ञानरूपम्) शब्दरूपञ्च एतेषां नये ब्रह्म। तदुक्तं वाक्यपदीये –

" अथायमान्तरो ज्ञाता सूक्ष्मोवागात्मनिस्थितः।"[3]

यथा अद्वैतिनये अखिलंजगत् ब्रह्मणो विवर्तभूतम् एवं शाब्दिकदर्शनेपि वेदेभ्य आरभ्य- सर्वे व्यावहारिकाः शब्दाः अर्थाश्च सर्वे अस्य शब्दब्रह्मणः पारमार्थिकस्य अद्वितीयस्यैव शब्दतत्त्वस्यैव विवर्तभूताः।[4] शब्दार्थोभयस्माच्च अतिरिक्तं न किञ्चिज्जागत्कं वस्तु इति। अखिलस्य जगत्प्रपञ्चस्य पारमार्थिकं शब्दतत्त्वमेव उपादानम् (मूलकारणम्) उपादानता च एतन्नयेऽपि अद्वैतिनय इवाधिष्ठानतारूपा, यतः एतेऽपि विवर्तवादिनः, विवर्तवादे चाधिष्ठानता एव संघटते न जनकता परिणामिता वा। एतच्चानुपदमेव प्राग्दर्शितम् ब्रह्मणः शब्दरूपता जगदुपादानता

---

1- वै०सि०म०- शा०नि०, पृ० 42
2- तदनन्यत्वमारम्भणशब्दादिभ्यः । वे०सू० 2/1/14
3- वा०प० 1/112
4- वागेव विश्वा भुवनानि जज्ञे।

जगतः शब्दब्रह्मविवर्तभूतता च स्फुटमेवोक्ता शाब्दिकाचार्येण भर्तृहरिणा। तद्यथा–

" अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

अत्र शब्दतत्त्वमित्यनेन शब्दस्य प्रपञ्चं प्रति मूलकारणता मूलकारणभूतस्य ब्रह्मणो वा शब्दरूपता उक्ता। अत एवं जागत्कस्य सर्वस्यैव वस्तुजातस्य भानं शब्दानुविद्धं दृश्यते भानमात्रे शब्दानुगम अनुभूयते इतियावत्। तदुक्तम्–

" न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते।।[2]

उपपादितञ्चैतत् स्वोपज्ञवृत्तौ हरिणा। विवर्ततेऽर्थभावेन इत्यनेन अस्य शब्द–ब्रह्मणः विवर्तोपादानता अर्थजातस्य शब्दब्रह्मविवर्तरूपता अत एव च अपारमार्थिता बोधिता। यतः अत्र विवर्तते इत्यनेन " अतत्त्वतोऽन्यथा प्रथा " रूपः अद्वैतिसम्मतः विवर्त एव वाक्यपदीयकर्तुः विवक्षितः । तथा च व्याचष्टे सः कारिकांशमिमं स्वोपज्ञवृत्तौ–

"एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः। "स्वप्नविषय- प्रतिभासवत्"[3]। प्रक्रिया जगतो यतः इत्यनेन जगत्प्रपञ्चस्य शब्दब्रह्मप्रभवता स्फुटमेव उक्ता। " तत एव शब्दाख्यादुपसंहृतक्रमाद् ब्रह्मणः

---

1– वा०प० 1/1
2– वा०प० 1/123
3– वा०प० 1/1 स्वोपज्ञवृत्तिः ।

सर्वविकारप्रत्यस्तमये संवर्तादिनाकृतात् पूर्वं विकारग्निथत्वेनाव्यपदेश्याज्जगदाख्या: विकारा: प्रक्रियन्ते । स्वोक्तस्यास्य अर्थस्य दृढीकरणार्थं प्रमाणतया इमे श्लोका अपि तेनोपन्यस्ता:-

" य: सर्वकल्पनामाभासेऽप्यनवस्थित: ।
तर्कागमानुमानेन बहुधा परिकल्पित: ।।
व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते।।
अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते ।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते।।
प्रकृतित्वमपि प्राप्तान् विकारानाकरोति स:।
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ।।
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्गितमुत्पाते पारिराशेरिवोदकम्।।
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिण:।।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहका:।।
त्रयीरूपेण तज्ज्योति: परमं परिवर्तते।
पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ।।
शान्तविद्यात्मकं योऽशस्तद् द्वैतदविद्यया ।
तया ग्रस्तमिवाग्रसं या निर्वक्तुं न शक्यते ।।
सर्वत: परिधर्तानां परिमाणं न विद्यते।

---

1- वा0प0-1/1 स्वोपज्ञवृत्ति:।

तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते ।।
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ।।
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ।।
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ।।[1]

एतैः श्लोकैरपि ब्रह्मणोऽद्वितीयत्वम् § अद्वैतवादः § प्रपञ्चस्य विवर्तरूपत्वं वेदत्रयी एव शब्दब्रह्मणः आद्यो विवर्तश्चेत्यादिकाः शाब्दिकसिद्धान्ताः प्रकाशमायान्ति ।

"शब्दस्य परिणामोऽयमित्याम्नाय विदो विदुः"[2]

इति कारिकया वाक्यपदीयकृता या जगतः शब्दपरिणामता उक्ता सा कार्यशब्दाभिप्रायेण न तु ब्रह्मात्मकनित्यशब्दतत्त्वाभिप्रायेण। एतच्चाग्रे विवर्तविपरिणामसमीक्षावसरे प्रकाशमानेष्यते।

एकस्य शब्दतत्त्वस्य नानारूपतायां बीजम्-

अथ यदीदं अखिलस्य प्रपञ्चस्य मूलभूतं शब्दाख्यं तत्त्वम् एकमद्वितीयं सकलतत्त्वाच्छब्दार्थरूपेण विवर्तते तदा अनुभूयमानः अयं सर्वोऽपि भेदप्रतिभासः कथम्

---

1- वा०प०- 1/1 उद्धृतम्
2- वा०प०- 1/ 120

कथं वा एकरूपस्य अभिन्नस्य ब्रह्मतत्त्वस्य विभिन्नरूपताऽभास इति चेत् ? अत्र एष समाधिः शाब्दिकानाम् – यद्यपि शब्दरूपं ब्रह्मतत्त्वमेकमेव तथापि अनादि-भूता एकत्वाविरोधिन्यः परस्परविरोधिन्यश्च नानाशक्तयः ब्रह्मणि समाश्रिताः।[1] परस्परविधिन्योपि च ताः ब्रह्मणः एकत्वं न बाधन्ते। यथा परस्परविरोधिनो- – पि गोघटवृक्षाद्यात्मना परिणताः बुद्धेराकाराः प्रतिभासाः वा बुद्धेरेकत्वं न विरुन्धन्ति। एताभिश्च नानाभूताभिः स्वगताभिःशक्तिभिः वस्तुतः एकरूपमपि ब्रह्मतत्त्वं तदाख्यं शब्दतत्त्वं वा नानारूपतां[2] भजति–नानारूपेण प्रतिभासते इति–यावत्। अद्वैतवादे शक्तिशक्तिमतोरभेदात् अन्ततः ताः शक्तयः ब्रह्मात्मिका एव, अतो नाद्वैतहानिः। भेदावभासस्तु अविद्याकल्पित एव। यथोक्तं भर्तृहरिणा–

" एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते।।[3]

यदनादिनिधनमित्यादिपूर्वकारिकोक्तं शब्दब्रह्म एकमेव,अद्वितीयमेव तद्विभिन्नशक्त्याश्रयाद् भिन्नं नानारूपमिव प्रतिभासते। अथ च वस्तुतः शक्ति-भ्यो पृथक्त्वेऽपि = अभिन्नत्वेऽपि शक्तिभेदमूलकः ब्रह्मणः ताभ्यो भेदावभासः, न तु वास्तव इति एतत्कारिकार्थः । यथा च व्याचष्टे कारिकामिमां स्वोपज्ञ-वृत्तौ हरिः स्वयमेव–

------------------

1– सूक्ष्मामर्थेनाप्रविभक्त तत्त्वामेकां वाचमभिष्यन्दमानाम्
उतान्ये विद्वरमूतामिव च पूतां नानारूपामात्मनि सन्निविष्टाम्।।

2– वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम् ।
अथेदं वाग् बुभुजेवागुवाच पुरूत्रा वाचो न परं यच्च नाह ।।

3– वा०प० 1/2

"भिन्नं शक्तिव्यपाश्रयात् । एकत्वस्याविरोधेन शब्दतत्त्वे ब्रह्मणि समुच्चिता विरोधिन्य आत्मभूताः शक्तयः। तद् यथा भिन्नार्थप्रत्यवभासमात्रायामेकस्यामुपलब्धौ अर्थाकारकप्रत्यवभासमात्राः पृथिवीलोका इति। न हि ज्ञेयगतो वृक्षाद्याकारावग्रहो ज्ञानस्यैकत्वेन विरुद्ध्यते। नास्याकारात् तदाकारस्यात्मभेदोऽस्ति, तेषामेकज्ञानतत्त्वानतिक्रमात्। तदेवमपृथक्त्वं पृथक्प्रत्यवभासानामपि मिथः सर्वशक्तीनाम् ।

अपृथक्त्वेऽपि शक्तिभ्य इति। न खलु जातिव्यक्तिव्यवहारवदन्याः काश्चिच्छक्तयो ब्रह्मणो व्यतिरेकिण्यो विद्यन्ते। तत्तु प्रकाशवत्प्रकाश्यावग्रहाभ्यो बहिस्तत्त्वाभ्य इवात्ममात्राभ्यस्तादात्म्येऽपि सति पृथक्तत्त्वमिव अवसीयत इति।[1]

एतदनुसारेण च शाब्दिकसम्मतेऽस्मिन् शब्दब्रह्माद्वैतवादे अद्वितीयस्यापि ब्रह्मणः परस्पर विरोधिन्यः परस्परविरुद्धप्रत्ययभासप्रयोजिका इयावत्- अनेका अनन्ता वा शक्तयः, ताश्च अन्ततः ब्रह्मात्मिका एव। ता एव च नानारूपैः प्रतिभासम् (विवर्तम्)[2] प्रयोजयन्ति । वेदान्तिसम्मताद्वैतवादे तु अविद्या इति माया इति वा व्यपदिश्यमाना अनादिभूता अनिर्वाच्या ब्रह्मणः एका शक्तिः, तद्विलसित चाखिलं जगत् ।

----------------

1- वा०प० 1/2, स्वोपज्ञवृत्तिः

2- वागेव बुद्ध्यात्मना स्थितं सूक्ष्मं वाक्तत्त्वमेव विश्वा भुवमानि वाच्यवाचकोभयात्मकानि जज्ञे। यदमृतमाकल्पान्तम् स्थायि वियदादिकं यच्च मर्त्यं मध्ये एवं विनाशि कार्यजातं तज्जज्ञे।
1/120 अम्बाकर्त्री

शब्दनित्यताविषये हरिनागेशयोः दृष्टिभेदः-

इदमत्र ध्येयम् - वाक्यपदीयकारः शब्दात्मकस्य उपरिवर्णितस्य सकलनामार्थोपादानभूतस्य ब्रह्मतत्त्वस्य पारमार्थिकीं नित्यतामिच्छन्ति। अत एवाह सः -

" अनादिनिधनमिति

नागेशस्य तु अत्र विषये दर्शनं भिद्यते, स हि शब्दब्रह्मणो व्यावहारिकीं यावत् सृष्टिस्थितिरूपां वा नित्यतामाह । तन्मतानुसारेण शब्दाख्यं ब्रह्मतत्त्वं न परब्रह्मात्मकम् अपितु तत्सृष्ट्यन्तर्गतम्। अस्य नित्यत्वन्तु यावत् सृष्टिस्थित्या न तु त्रिकालाबाध्यत्वरूपम्, तथा च लिलेख लघुमञ्जूषायां सः-

"प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षयात्लीनसर्वजगत्का माया चेतने ईश्वरे लीयते। ततो परिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतो बुद्धिपूर्विकासृष्टिः मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्यबिन्दोरचिदंशो बीजम्। चिदचिन्मिश्रोऽशो नादः । चिदंशो बिन्दुरिति। अविच्छब्देन शब्दार्थोभयसंस्कारूपा विद्योच्यते । अस्माद् बिन्दोः शब्दब्रह्मापरनाधेयम्, वर्णादिविशेषरहितम्, ज्ञानप्रधानम् सृष्टयुपयोग्यवस्थाविशेषरूपम्, चेतनमिश्रम्, नादमात्रमुत्पद्यते, एतज्जगदुपादानमेव "रव" "परा" आदि शब्दैः व्यवह्रियते।"[2] स्वोक्तस्यास्य अर्थस्य प्रमाणनार्थं नागेशेन इमे कारकेअपि उपन्यस्ते।

---

1- वै०सि०ल०म०, श०नि०,पृ० 141
2- वै०सि०ल०म०-श०नि०,पृ० 145

"बिन्दोस्तस्माद्भिद्यमानाद्रवो व्यक्तात्मको भवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ।।[1]
क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्या शब्दब्रह्माभवत् परा ।।

एवञ्च नागेशस्यापि शब्दतत्त्वस्य जगदुपादानत्व-विषये हरिणा समाना दृष्टिः, परं नित्यत्वस्वरूपविषये सा पुनर्भिद्यते। वाक्यपदीयकारः शब्दब्रह्ममूलभूतं किञ्चित् तत्त्वान्तरं नाभ्युपगच्छति अपितु इदमेव सर्वस्य मूलभूतं तत्त्वम्।[2] नागेशस्तु अस्य समूलत्वं मन्यते, यथास्फुटम् उपर्युद्धृतेन मञ्जूषांशेन। परन्तु इदं नागेशीयं वर्णनं तन्त्रवासनया। तेन स्वोक्तेऽर्थे उपोद्बलकतया (पोषकतया) उपन्यस्तौ उपर्युक्तौ श्लोकावपि तन्त्रशास्त्रीयौ। इत्थञ्च तन्त्रवासनया एव नागेशः शाब्दिकसिद्धान्तम् इत्थं व्याचष्टे इतिप्रतीयते। शाब्दिकानां वास्तवः सिद्धान्तस्तु वाक्यपदीयोक्त एव ।

सृष्टेः मीमांसकानां दार्शनिकानां ये प्रमुखाः त्रयो वर्गाः आरम्भवादिनो विपरिणामवादिनो विवर्तवादिनश्चेति तेषु चरमे वर्गे शाब्दिकाः समायान्ति इत्येतेन विवेचितेन स्फुटम् । इदानीम् आरम्भविपरिणामविवर्तानां स्वरूपनिर्वचन - पुरस्सरम् एतेषां त्रयाणां वादिनां सृष्टिविषयिण्यः धारणाः संग्रहेण उपस्थाप्यन्ते।

-----------------

1- प्रपञ्चसार- 1/ 43, वै०सि०ल०म०

2- (क) विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ।। 1/10
(ख) स हि सर्वशब्दार्थप्रकृतिः । स्वोपज्ञवृत्तिः

## :: सृष्टिविषये वादत्रयम् ::

अखिलमिदं जगदात्मकं कार्यजातं त्रेधा व्याचक्षते दार्शनिकाः । त्रीणि एतेषाम् एतद्विषये दर्शनानि- आरम्भः विपरिणामः विवर्तश्चेति ।

आरम्भः-

तत्रारम्भो नाम उत्पत्तिः,सा च कारणव्यापारात् प्रागसतः कार्यस्य तदुत्तरं सत्तालाभ एव, यथा मृदवस्थायां दण्डचक्रादिव्यापारात् पूर्वमभवन् तदुत्तरं च भवन् घटः उत्पद्यते इति व्यपदिश्यते। इदञ्च कणादगौतमीयादीनाम असत्कार्यवादिनां दर्शनम् । एते हि पृथिव्यादुपादानभूतेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेणाखिलस्य जगतः उत्पत्तिं वर्णयन्ति। एतन्मते परमाणव एव विश्वात्मकस्य कार्यजातस्यारम्भकाः । जीवादृष्टेश्वरादिकञ्च तत्र सहकारि,कार्यञ्च कारणव्यापारात् प्रागसदेव तत्तत्कारणैः जन्यते,कारणगुणात्मकञ्च भवति। कारणं कार्यमिव कारणगुणाः कार्यगुणानारभन्ते, अतिरिच्यते च कारणात् कार्यम् यथा तन्तुभ्यःपटः । अन्ये तन्तवः अन्यश्च तैरारभ्यमाणः पटः,इति हि एतेषां दर्शनम् ।

विपरिणामः -

विपरिणामस्तु कारणस्यावस्थान्तरापत्तिः तात्त्विकोऽन्यथाभाव इति[2] यावत्। दर्शनमिदं कापिलानां विशिष्टाद्वैतिनाञ्च । एते हि न क्वापि कारण-

-----------------

1- प्रशस्तपादभाष्य- पृ0 19-22

2- कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता । श्रीभाष्य- 1/1/5

व्यापारशतेनापि असतः सत्त्वमुत्पत्तिं वा नेच्छन्ति।

" नासतो विद्यते भावः नाभावो विद्यते सतः[1] "इति हि एतेषामुद्घोषः। एतन्मते कारणव्यापारात्प्रागपि सदेव कार्यं कारणव्यापारेणाभिव्यज्यते आविर्भवति इति यावत्। यथा- शिलाखण्डे सन्नेव मूर्त्याकारः कारुव्यापारेणाभिव्यज्यते न तु असन्नुत्पद्यते, एवम् मृदाद्यवस्थायांमृदादिरूपेण सदेव घटादिकार्यं दण्डचक्रादिव्यापारैरभिव्यक्तिं नीयते। इयमभिव्यक्तिरेव चाविर्भाव इत्युच्यते। इत्थञ्च अवस्थैव भिद्यते न तु वस्तु। मृदेवघटाद्यवस्थामापद्यते कारणव्यापारादुत्तरम्, ततः पूर्वन्तु घटो भवति मृदवस्थः। एतदेव एतेषां दर्शनम् जगदात्मकस्याखिलस्यापि कार्यजातस्य विषये। प्रकृतिप्रधानाख्यं त्रिगुणात्मकं मूलभूतं तत्त्वम् निखिलस्यास्य जगतः उपादानम्[2]। तदेव च लब्धगुणवैषम्यादिरूपसामग्रीकं क्रमेण जगदात्मना परिणमते। अनन्यच्च दर्शनेऽस्मिन कारणात् कार्यम्। यथा तन्तव एव अवस्थान्तरमापन्नाः पटः इत्युच्यन्ते, न तु तन्तुभ्यो व्यतिरिक्तः पटो नाम। इयमवस्थान्तरापत्तिरेव कारणस्य कार्यात्मना परिणामः,अयमेव च कार्यस्य आविर्भावः,आविर्भाव एव च-

"पट उत्पद्यते" इत्येवमुत्पत्त्यादिशब्दैः व्यपदिश्यते, न तु प्रागसत्त्वे सति सत्त्वरूपोत्पत्तिरेतन्मतेऽस्ति[3]।

-----------------

1- गीता - 2/16

2- (क) गुणानां साम्यावस्था प्रकृतिः। सा०प्र०भा०-

(ख) अजामेकां लोहितशुक्लकृष्णाम्

बह्वीं प्रजां सृजमानां नमामः। सा०का०

3- तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटः न तु तन्तुभ्यो र्थान्तरं पटः। सा०का०-9 तत्त्वकौमुदी।

विवर्त:-

विवर्तस्तु पुन: वस्तुनोवस्थान्तराभास: अतात्त्विकोऽन्यथाभाव इतियावत्। यथा रज्जो: सर्पतयाभास:, दर्शनमेतदद्वैतिनाम् । अत्र दर्शने नारम्भवाद इव प्रागसत् कार्यं कारणाज्जायते नापि परिणामवाद इव कारणं कार्यरूपेण परिणमति-तात्त्विकीं कार्यवस्थामापद्यते- अपितु अविकृतरूपेमव कारणम् वासनादिवशेन केवलं कार्यात्मना आभासते, यथा रज्ज्वादिकं वस्तुतो विकृतरूपमेव सर्पाद्यात्मना भासते, कार्यञ्च असदेव कारणव्यापारात प्रागपि पश्चादपिच[2] । आरम्भवादे पुन: प्रागसदपि पश्चाद् भवति सत, परिणामवादे तु सर्वदैव सदिति एतद्वादद्वयापेक्षया विवर्तवादेऽयं महान् विशेष: । निखिलमपि जगदात्मकं कार्यं मूलकारणापेक्षया विवर्त: । जगतो मूलकारणञ्च अद्वयं ब्रह्मतत्त्वं तदेव च मायासंवलितं वेदान्तवर्णितादिशा विश्वात्मकविविधकार्यरूपेणाभासते, कार्याणि च प्रतिभासमात्रशरीराणि, रज्जुसर्पादिवत् असत्यानि[3] । अस्मिन्नपि दर्शने कार्यकारणयो: अनन्यत्वम्, किन्तु नेदमनन्यत्वं-तादात्म्यरूपं, यत: ब्रह्मरूपं कारणम् सत, जगदात्मकं कार्यञ्चासत्, सदसतोश्च तादात्म्यं न संभवति, अपितु ब्रह्मणोऽन्यत नास्ति किञ्चिदितिकृत्वा अन्यस्यजगतोऽभाव एव कार्यस्य कारणादनन्यत्वम्[4] । जगत्कारणत्वमपि चास्मिन् सिद्धान्ते ब्रह्मण: अधिष्ठानत्वरूपम्

-----------------

1- अनृतत्वात् कार्यवस्तुन:, न हि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति । तै0 उ0 2/1

2- कारणस्यैव संस्थानमात्रं कार्यम् । ब्र0सू0शां0 भा0 2/2/1

3- सर्वज्ञस्येश्वरस्यात्मभूत इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्च बीजरूपे सर्वज्ञस्य ईश्वरस्य मायाशक्ति: प्रकृतिरिति। ब्र0सू0शां0भा 2/2/14

4- ब्र0सू0शां0भा0 2/1/15

न तु जनकत्वरूपं परिणामित्वरूपं वा। एतच्च प्राक्प्रपञ्चितम्। विशिष्टाद्वैतवादे तु तादात्म्यरूपं कारणकार्ययोः अनन्यत्वम्। तन्मते हि सूक्ष्मचिदचित्शरीरकम् ब्रह्म विश्वात्मककार्यरूपेण परिणमते। स्थूलचिदचिच्छरीरकं ब्रह्मैव च कार्यं,कारणमिव च कार्यमपि सदिति उपपद्यते तादात्म्यरूपमनन्यत्वम्।[1] एवञ्च अद्वैतविशिष्टाद्वैतयोः ब्रह्मकारणतावादिनोरपि विवर्तपरिणामकृतो महान् विशेषः। अद्वैतिनो हि ब्रह्मणः विवर्तोपादानत्वमिच्छन्ति, विशिष्टाद्वैतिनस्तु परिणामोपादानत्वम्।

<u>विवर्तविपरिणामयोर्विशेषः-</u>

अनयोश्च विवर्तपरिणामयोः जगतः अतात्त्विकत्वतात्त्विकाभ्युपगमः एवाधारः। तदुक्तम् -

सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोन्यथाप्रथा विवर्तइत्युदाहृतः।।[2]
अवस्थान्तरतापत्तिरेकस्य परिणामिता।
स्यात् क्षीरं दधि मृत्कुम्भः सुवर्णं कुण्डलं यथा।।
अवस्थान्तरताभानं तु विवर्तोरज्जुसर्पवत्।।

कार्यकारणयोः सत्तापेक्षयापि विवर्तविपरिणामौ परिभाषन्ते विद्वांसः, तथाहि उपादानसत्तासमसत्ताककार्योपपत्तिः विपरिणामः, उपादानसत्ताविषमसत्ताक-कार्योपपत्तिः विवर्तः। यत्र उपादानस्य कारणस्य यादृशी सत्ता तादृशी एव सत्ता कार्यस्यापि, तत्र परिणामव्यपदेशः यथा- दधि दुग्धस्य परिणामः।

---

1- ब्र०सू० 1/2/21, वेदान्तकल्पतरुपरिमल।
2- पञ्चदशी 13/8-9

सर्वमते एव हि द्वयोरप्युभयोरपि एकविधा सत्ता, सा अद्वैतिमते व्यावहारिकी मतान्तरे तु पारमार्थिकीत्यन्यत्। यत्र तु अन्यविधा कारणस्य सत्ता अन्यविधा च कार्यस्य तत्र विवर्तव्यवहारः, यथा- रज्जुसर्पयोः। सर्वमते एव अन्यविधा सर्पस्य सत्ता अन्य- विधा च रज्जोः। तत्र रज्जोः अद्वैतिमते व्यावहारिकी सत्ता नयान्तरे तु पारमार्थिकी। सर्पस्य तु प्रायेण सर्वनये एव प्रातिभासिकी सत्ता।

इदमत्रध्येयम्- पदार्थानां त्रिविधा सत्ता- पारमार्थिकी व्यावहारिकी प्रातिभासिकी च। तत्राखिलस्य जगतः विवर्तापादनुभूतस्य अद्वयस्य ब्रह्मणः पार-मार्थिकी सत्ता। तदतिरिक्तस्य अखिलस्यापि विवर्तात्मकस्य प्रपञ्चस्य व्याव-हारिकी सत्ता। वस्तुतः असत्यस्यापि तस्य यावद् व्यवहारं तदनुवृत्तेः, ब्रह्म-ज्ञानेनैव च तन्निवृत्तेः।

शुक्तिरजतादेस्तु प्रातिभासिकी सत्ता। व्यवहारकाले एव रजतादिज्ञानेन तन्निवृत्तेः। तदेवं त्रिकालाबाध्यत्वं पारमार्थिकसत्त्वम्, यावद्व्यवहारमनुवर्त-मानत्वं ब्रह्मज्ञानातिरिक्तान्यज्ञानानिवर्त्यत्वे सति ब्रह्मज्ञाननिवर्त्यत्वं वा व्यावहा-रिकसत्त्वम्, वृत्त्यन्तरनिवर्त्यत्वं प्रातिभासिकसत्त्वम् इत्येवं रीत्या सत्तात्रयमिदम् शक्यते परिभाषितुम्, इदञ्च अद्वैतवादानुसारेण द्रष्टव्यम् विशिष्टाद्वैतादिदर्शने तु द्वे एव सत्ते-पारमार्थिकी प्रातिभासिकी च। एतद्दर्शने हि ब्रह्म इव जगदपि पारमार्थिकं सत्। तदेवम् कारणकार्यभूतयोः ब्रह्मजगतोरुभयोरपि पारमार्थिकसत्त्वेन कार्यस्य कारणसत्तासम- सत्ताकत्वात् जगतो भवति ब्रह्मपरिणामता। अद्वैतदर्शने तु तयोः अस्ति पारमार्थिकत्वव्यावहारिकत्वकृतः सत्तागतो विशेष इति जगद् ब्रह्मणो विवर्तः।

इदमत्रध्येयम् -अयं विवर्तपरिणामविषयकः प्रभेदः मूलकारणमपेक्ष्यैव न तु जागत्कानि कार्यकारणान्यपेक्ष्य। विवर्तवादिनापि हि यत्र कार्यकारणे उभेअपि व्यावहारिके तत्र परिणामता एवाभ्युपगन्तव्या। यथा- दधि दुग्धस्य परिणाम एव, यद्यपि उभेअपि ब्रह्मणो विवर्तभूते। एवञ्च विवर्तवादेऽपि यद्यपि अखिलम् कार्यजातं मूलकारणभूतब्रह्मापेक्षया विवर्तः, तथापि विवर्तस्य यत्कार्यं तत्तदपेक्षया परिणाम एव। उभयोरपि व्यावहारिकत्वेन समसत्ताकत्वात् । एवं परिणामवादेऽपि विवर्तस्य सर्वथैव न अस्तित्वमिति न, रज्जुसर्पादिस्थले परिणामवादिनापि सर्पस्य विवर्तरूपतैवाभ्युपगन्तव्या। तदित्थं जागत्केषु मूलकारणातिरिक्तेषु वा पदार्थेषु यत्र परिणामपरिणामिभावः परिणामवादिनः सम्मतः सम्मतः, तत्र विवर्तवादेऽपि परिणामपरिणामिभाव एव। यत्र तु विवर्तरूपता विवर्तवादिनः मता, यथा रज्जुसर्पादौ तत्र परिणामवादेऽपि विवर्तरूपतैव।

<u>अत्र विषये शाब्दिकानां दृष्टि</u> :-

सम्प्रति वैयाकरणानां विवर्तपरिणामविषये का दृष्टिरिति विमृशामः। यस्मात् शब्दतत्त्वात् जगतः प्रथमोत्पत्तिः भवति, तत् शब्दतत्त्वमेव ब्रह्म। शब्देनैव अर्थः परिच्छिन्नो भवति। अर्थश्चेत् शब्दात्मको न स्यात् तदा शब्दाज्जायमाने ज्ञाने तत्प्रतीतिरपि न भवेत्। सर्वेषां व्यवहाराणाम् अथ च विषयीभूतानां पदार्थानां मूलकारणं शब्द एव भवति। अतः शब्दतत्त्वमेव अर्थरूपेण विवर्तते इति स्वीकरणमेव समीचीनम्।" अथ गौरित्यत्र कः शब्दः"इति भाष्यमपि एवमेव विवर्तं संकेतयति, यतः गौरिति उच्चारणेन सास्नालाङ्गूलादियुक्तो रूपविशेष एव बोधविषयत्वेन उपलभ्यते। अद्वैतिन इव शाब्दिका अपि जगतः

---

1- न हि सर्वशब्दार्थप्रकृतिः । [illegible] 1/10 स्वोपज्ञवृत्तिः।

मूलकारणापेक्षया विवर्तरूपतामेवाभ्युपगच्छन्ति, तथा च स्फुटमेव प्रत्यपादयत् वैयाकरणानां प्रामाणिकः आचार्यो भर्तृहरिः वाक्यपदीयारम्भ एव –

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।[1]

अत्र "विवर्ततेऽर्थभावेन " इत्यनेन शब्दात्मकस्य अनादिनिधनस्य परमार्थसतः अद्वयस्य, ब्रह्मतत्त्वस्याखिलमपि जागत्कम् कार्यजातं विवर्त इत्युक्तम् । अग्रेऽपि–

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ।।[2]

इत्यादिकारिकाभिः शब्दब्रह्मात्मकस्य अद्वैततत्त्वस्य पुष्टीकरणेन ब्रह्मणोऽद्वयतायाः व्यवस्थापनेनेति यावत्– विवर्तवादे दृढं पक्षपातः सूचितो वाक्यपदीयकृता। अत्र यदधिकं वक्तव्यं तत् प्रागुक्तम्। विवर्तवादाभ्युपगमं विना हि अद्वैतवादो न शक्यते प्रतिष्ठातुम। वैयाकरणमूर्धन्येन कौण्डभट्टेनापि वैयाकरणभूषणसारे–

श्री लक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते ।।[3]

इत्येनेन विवर्तवाद एवादरो दर्शितः ।

वाक्यपदीये विवर्तविपरिणामयोः सामञ्जस्यम्–

अथाद्वैतवादस्य तदुपपादकस्य विवर्तवादस्य च प्रतिपादनपरेऽपि वाक्यपदीये विवर्तपरिणामावादाय या विसंगतिरापाततः परिलक्ष्यते तत्र मनागदृष्टिपातं कुर्मः तथाहि–

---

1– वा०प० 1/1
2– वा०प० 1/2
3– वै०भू०सा०– मङ्गलपादः –1

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।

छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ।।[1]

इत्यस्याः कारिकायाः पूर्वार्धेन वाक्यपदीयकारः जगतः परिणामात्मकताम् उत्तरार्धेन तु विवर्तरूपतां प्रतिपादयति। अनादिनिधनम् इत्याद्युक्तकारिकानिचयेनापि च विवर्तवादमेव समर्थयते सः। तदिदंभवति विरूद्धार्थम् । अत्र केचित् परिणामविवर्तशब्दयोरनन्यार्थताम्भ्युपगम्य शब्दस्य परिणामोयम् " इत्येतां कारिकां संगमयन्ति। तथाहि तात्त्विकत्वातात्त्विकत्वविशेषानादरेण केवलमवस्थान्तरता रूपसाम्यमादाय क्वचित् परिणामोऽपिविवर्त इति विवर्तोऽपि च परिणाम इति व्यपदिश्यते। इदमेव च दर्शनं शब्दस्य परिणामोऽयमिति वदतः हरेः। अन्यत्रापि परिणामविवर्तयोः पर्यायता दृश्यते। तद्यथा–

एको रसः करूण एव निमित्तभेदाद् ,

भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्।

आवर्तबुद्बुदतरङ्गमयान् विकारान् ।

अम्भो यथा सलिलमेव हि तत्समस्तम्।।[2]

इतिपद्ये भवभूतिः विपरिणमार्थकं विकारशब्दं विवर्तशब्दञ्च एकार्थतया प्रायुंक्त। अत्र हि श्लोके आवर्तबुद्बुदादिरूपैः सलिलविकारैः रसान्तररूपान् करूणरसविवर्तान् निदर्शयति कविः। विकारैः विवर्तानां निदर्शनञ्च विवर्तविकार–

----------------

1– वा०प० 1/120

2– उ०रा० – 3/47

शब्दयोः एकार्थतायामेवोपपद्यते। अन्यथा उक्तश्लोकस्य विकारविवर्तयोः दृष्टान्तदार्ष्टान्तिकता भज्यते। स्फोटसिद्धेः गोपालिकाटीकाकारेण विश्वं शब्दतत्त्वस्य परिणामः विवर्तश्च स्वीक्रियते- सांख्यमतानुसारेण परिणामः, अद्वैतमतानुसारेण विवर्तः।

द्वैतमाहुरिदन्त्वन्ये ब्रह्मद्वयनिबन्धनम् ।

शब्दब्रह्मपरब्रह्मरूपेण ब्रह्मवादिनः ।

शब्दब्रह्मैव तेषां हि परिणामिप्रधानवत् ।

वैखरी मध्यमा सूक्ष्मा भागावस्था विभागतः।।

अनेन तथ्यमिदं स्पष्टं भवति यत् शब्दब्रह्म जगद्रूपेण परिणमते। विवर्तवादं प्रतिपादयन् तेन लिखितं यत् ईश्वरः संसारावस्थायां स्थूलपृथिव्यादिरूपेण विकृतो भवति,परमार्थावस्थायां तु अणुस्थः एव।

मायामात्रमिदं चैवमित्याह हि पराश्रुतिः।

दृश्यत्वाद् विमतं मिथ्या शुक्तिकारजतादिवत्।।

अस्माकन्तु एतद्विषये इयं दृष्टिः यत् शब्दस्यपरिणामोऽयम् इति पूर्वार्द्धे शब्द-इतिपदम् न मूलकारणभूतपराख्यशब्दब्रह्मपरम् अपितु तद्विवर्तभूतपश्यन्त्याख्यशब्द-तत्त्वपरम् वैखर्यात्मकस्थूलशब्दपरंवा कार्यशब्दब्रह्मपरमितियावत्। स्थूल-शब्दतत्त्व वर्णनमेव च अत्रास्ति प्रकृतम्। पराख्यस्य शब्दब्रह्मणःआद्यो विवर्तः पश्यन्ती,सा

---

1- वाचारम्भणं विकारो नामधेयम्। छा०उ० 6/1/4

च वेदात्मिका वाक्। अत एव च " प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः"[1] इत्यनेन वेदस्य शब्दब्रह्मानुकृतिरूपता वाक्यपदीये प्रतिपादिता। " छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत"[2] इत्युत्तरार्धे व्यवर्तत इत्यस्य अजायत इत्यर्थः। जनिश्चात्र विपरिणामरूपा एव। छन्दोभ्य इति पंचमी तु " जनिकर्तुः प्रकृतिरित्यनुशासनात्।[3] अयमुत्तरार्धश्च शब्दस्य परिणामोऽयमिति पूर्वार्धस्यैव विश्लेषणभूतः । तत्पश्चाय-मस्याः कारिकाया अर्थः पश्यन्त्याख्यस्य मूलशब्दतत्त्वविवर्तभूतस्य शब्दतत्त्वस्यायं सर्वोऽपि प्रपंचः परिणामः। तथाहि उक्तपश्यन्तीरूपवागात्मकेभ्यः छन्दोभ्यः= वेदेभ्यः विश्वमेतदजायत । यद्वा शब्दस्य परिणामोयमिति पूर्वार्धेन आद्यविवर्त-भूतस्य वेदात्मकस्य शब्दतत्त्वस्य परिणामः जगदिति प्रतिपाद्य उत्तरार्धेन वेदस्य शब्दब्रह्मणः आद्यविवर्तरूपतां प्रतिपादयति वाक्यपदीयकारः। अस्मिन् पक्षे छन्दो-भ्यः इति पञ्चमी प्रभृत्यादियोगेबोध्या।[4] प्रथमं छन्दांसि आरभ्य एतद्विश्वं ब्रह्मणः व्यवर्तत इति च तदर्थः। वेदानां शब्दब्रह्मण आद्यविवर्तरूपता शब्दशब्दा-र्थात्मकजगत्कारणता चेत्युभयमपि अनादिनिधनमित्यादिवाक्यपदीयपद्यट्कव्याख्याना-वसरे प्राक्दर्शितम्। छन्दांसि एव प्रथमः शब्दब्रह्मणः विवर्त इति यावत् । एवञ्च पश्यन्त्यात्मकशब्दापेक्षया जगतः परिणामरूपता, पराख्यशब्दब्रह्मापेक्षया तु विवर्त-

---------------

1- वा०प० 1/5
2- वा०प० 1/120
3- वा०मू० 4/1/30
4- अपादाने पञ्चमी § 2/3/28§ इति सूत्रे कार्तिक्याःप्रभृतीति भाष्य प्रयोगात् प्रभृत्यर्थयोगे पञ्चमी ।

रूपता हरेः प्रतिपिपादयिषिता। मूलकारणापेक्षया विवर्तवादेऽपि विवर्तस्य यत्कार्यं तत्तद्विवर्तापेक्षया परिणाम एव भवति इति प्रागेवास्माभिः व्यवस्थापितम्। तदेवं - अनादिनिधनमिति कारिकानुसारेण शब्दब्रह्मणो विवर्तस्यापि जगतः आद्यविवर्तभूतं पश्यन्त्याख्यं वेदात्मकं शब्दमपेक्ष्य परिणामरूपताप्रतिवादनं न विरुद्ध्यते-

" नित्यं निर्दोषलेशं निरतिशयचिदानन्दसत्यस्वरूपम्,
ब्रह्मैवासीत पुरस्ताज्जगदुदयतो व्यक्तमेकं प्रशान्तम्।
तस्यैवोङ्काररूपा निखिलजगदुपादानभूतात्मशक्तिः,
प्रादुर्भूतिक्षणात्मा जयति सकलवाक्सृष्टिहेतुः पराख्या ।।

" शुभं भूयात्"

1- अमरकोषः - चौखम्भा संस्कृत संस्थान वाराणसी-सं0 2039

2- अर्थविज्ञान और व्याकरणदर्शन- हिन्दुस्थान एकेडमी, उ0प्र0 सन् 1951

3- आधुनिक भाषाविज्ञान की भूमिका- राजस्थान हिन्दी अकादमी-सन् 1974

4- उत्तररामचरितम्- भवभूति.

5- ऋग्वेदः सायणभाष्यम्

6- ऋग्वेदभाष्यभूमिका- विद्याभवनसंस्कृतग्रन्थमाला- सन् 1960

7- ऋक्प्रातिशाख्यम् - चौ0 संस्कृत सीरीज, वाराणसी - सन् 1982

8- कारिकावली- चौ0 संस्कृत सीरीज, वाराणसी- सन् 1982

9- कौटलीयमर्थशास्त्रम्- कौटिल्य

10- काव्यप्रकाश:

11- काशिका - चौ0सं0 पुस्तकालय - सन् 1952

12- काव्यादर्श - दण्डी

13- तन्त्रवार्तिकम् - बनारस संस्कृत सीरीज - सन् 1903
-श्रीकुमारिलभट्ट:

14- तर्कभाषा - चौखम्भासंस्कृत सीरीज - सन् 1963
-श्रीकेशवमिश्र:

15- तर्कसंग्रह:, श्रीमदन्नमभट्ट:

16- तत्त्वबिन्दुः - श्रीवाचस्पतिमिश्र:

17- तत्त्वसंग्रह:- बौद्धभारती, वाराणसी सन् 1968

18- दुर्गासप्तशती

19- ध्वन्यालोक: - भारतीयविद्याभवन- सन् 1969

20- न्यायदर्शनम्- भारतीयविद्याभवन - सन् 1969

21- न्यायमञ्जरी- चौ0 संस्कृत सीरीज-
श्रीजयन्तभट्ट:

22- निरूक्तम् - महर्षियास्क: चौ0सं0 सीरीज

23- नेत्रतन्त्रम्.

24- न्यायपरिशुद्धि: - चौ0 सं0 सीरीज

25- न्यायसिद्धान्तमुक्तावली - चौ0सं0 सीरीज
श्री विश्वनाथपञ्चानन:

26- न्यायसूत्रम - सभाष्यम चौ0स0सी0

27- पदार्थशास्त्र - हिन्दी समिति, सूचना विभाग, लखनऊ- 1965

28- पदार्थतत्वनिर्णय: ——

29- पाणिनीयशिक्षाया: शिक्षान्तरै: सह समीक्षा - 1972
डॉ0 मधुकर फाटक

30- पाणिनीय-शिक्षा - काशी -

31- प्रकरणपञ्चिका- श्रीप्रभाकरभट्ट:- वाराणसी- 1904

32- परमलघुमञ्जूषा - रत्नदीपिकाव्याख्योपेता- वाराणसी

33- प्रमाणवार्तिकम्- चौ0 संस्कृतसीरीज, वाराणसी
श्रीधर्मकीर्ति:

34- पुराणपर्यालोचनम्- चौ0स0सी0, वाराणसी, सन - 1976
श्री कृष्णमणित्रिपाठी

35- पाणिनीयव्याकरणे प्रमाणसमीक्षा - सरस्वती भवन ग्रन्थमाला- 1972
-पण्डित रामप्रसाद त्रिपाठी

36- प्रशस्तपादभाष्यम्- श्रीप्रशस्तपादाचार्य: -काशी

37- पातञ्जलयोगदर्शनम्- मोतीलाल बनारसीदास- 1953

38- प्रौढमनोरमा - चौ0 संस्कृतसीरीज- 1940,

39- परिभाषेन्दुशेखर: - श्री नागेशभट्ट: काशी- सं- 2001

40- ब्रह्मसूत्रशांङ्करभाष्यम- चौ0 संस्कृतसीरीज, 1982

41- भर्तृहरि- के0ए0 अय्यर- राज0हि0 अकादमी, जयपुर- 1981

42- भामती- श्रीवाचस्पतिमिश्र:, नि0सा0 बम्बई-

43- भूषणसारपरमलघुमञ्जूषयो: - सरस्वती भवनग्रन्थमाला- 1983
सिद्धान्तनां समीक्षा

44- मनुस्मृति:

45- महाभारतम्

46- महाभाष्यप्रदीप:, श्रीकैयट:- काशी- सं0 1995

47- महाभाष्यप्रदीपोद्योत:,श्रीनागेशभट्ट:,काशी - सं0 1995

48- मानमेयोदय:, श्रीनारायणभट्ट: - त्रिवेन्द्रम - 1912

49- मीमांसादर्शनम्- श्रीजैमिनिमुनि:, पूना - 1929

50- मीमांसाश्लोकवार्तिकम् - चौखम्भासंस्कृतग्रन्थमाला -

51- माधवीयधातुवृत्ति: , प्राच्यभारतीयप्रकाशन- वाराणसी

52- मीमांसानुक्रमणिका-
-श्रीमण्डनमिश्र:

53- वैयाकरणभूषणसार: श्री कौण्डभट्ट:
प्रभादर्पणयुक्त

54- वैयाकरणसिद्धान्तकौमुदी- चौ संस्कृतसीरीज

55- वैयाकरणसिद्धान्तलघुमञ्जूषा चौ0स0सी0- 1973
श्री नागेशभट्ट:

56- वाक्यपदीयम्- सरस्वतीभवनग्रन्थमाला- 1976

57- व्याकरणदर्शनप्रतिमा- सरस्वतीभवन ग्रन्थमाला 1979
-आचार्यरामाज्ञापाण्डेयः

58- व्याकरणदर्शनभूमिका - सरस्वतीभवन ग्रन्थमाला 1982
श्रीरामाज्ञापाण्डेयः

59- वैयाकरणानामन्येषां च मतेन- 1979.
शब्दस्वरूपतच्छक्तिविचारः
-डॉ0 कालिकाप्रसाद शुक्लः

60- वेदान्तपरिभाषा(धर्मराजाध्वरीन्द्रः)- चौ0स0सी0- 1977
-श्रीगजाननशास्त्री मुसलगांवकर

61- वेदान्तसारः - मोतीलाल बनारसीदास- 1979

64- वैशेषिकदर्शनम्- चौखम्भासंस्कृतसीरीज- 1966
-ढुण्ढिराजशास्त्री

65- वैशेषिकसूत्रम- महर्षिकणादः काशी- 1957

67- व्याकरणमहाभाष्यम्- मोतीलाल बनारसीदास-1967

68- व्युत्पत्तिवादः,श्रीगदाधरभट्टाचार्यः,चौ0स0सी0

69- शब्दकौस्तुभः,श्रीभट्टोजिदीक्षितः 1933

70- शब्दशक्तिप्रकाशिका- कालिकाताविश्वविद्यालयः- 1914
श्रीजगदीशतर्कालंकारः

71- शब्दबोधविमर्शः -डा0 बी0एन0सिंह- वाराणसी .

72- शास्त्रदीपिका- निर्णयसागरप्रेस,बम्बई- 1915
-श्रीपार्थसारथिमिश्रः

73- शाबरभाष्यम् श्रीशबरस्वामी, पूना - 1929

74- शुक्लयुजुः सर्वानुक्रमणिका- कात्यायन

75- शक्तिवादः,श्रीगदाधरभट्टाचार्यः काशी- सं0 - 1940

76- श्लोकवार्तिकम् श्रीकुमारिलभट्टः, मद्रास- 1940

77- शांकरभाष्यम्-श्रीशंकराचार्यपादः- बम्बई- 1904

78- शतपथब्राह्मण- लक्ष्मीवेंकटेश्वर प्रेस ,बम्बई - 1940

79- श्रीमद्भागवतपुराणम् -

80- श्रीमद्भागवतगीता-

81- सर्वदर्शनसंग्रहः - चौ विद्याभवन - 1964
-माधवाचार्यः

82- सर्वार्थसिद्धिः - पूज्यपादस्वामी

83- सांख्यतत्त्वकौमुदी- वाचस्पतिमिश्रः

84- सांख्यप्रवचनभाष्यम्- विज्ञानभिक्षुः - सं0 2022

85- स्फोटवादः श्रीनागेशः आडियार, मद्रास- 1946

86- स्फोटसिद्धिः मण्डनमिश्रः - पाण्डिचेरी- 1958

87- सौन्दर्यलहरीस्तोत्रम् - श्रीशंकराचार्यः,पीताम्बरसंस्कृतपरिषद पटना-2031

88- स्फोटतत्त्वनिर्णयः

89- स्वच्छन्दतन्त्रम्

90-स्फोटसिद्धि- श्रीभरतमिश्रः- अनन्तशयनसंस्कृत ग्रन्थावलिः
स्फोटसिद्धिन्यायविचारः टी0गणपतिशास्त्रिणा सम्पादितम्

91- स्फोटदर्शन- श्रीरंगनाथपाठक, बिहारराष्ट्रभाषापरिषद 1967

92- संस्कृत साहित्य का इतिहास-शारदानिकेतन, वाराणसी-
आचार्य बलदेव उपाध्याय

93- संस्कृतव्याकरणशास्त्र का इतिहास- रामलालकपूर ट्रस्ट सं0 2030
-युधिष्ठिरमीमांसक सोनीपत, हरियाणा

94- संस्कृत वाङ्मय का इतिहास- ओरियण्ट लॉगमैन, दिल्ली- 1972
-डा0 सूर्यकान्त

95- प्रतिभादर्शन- डा0 हरिशंकरजोशी

96- वैदिक वाङ्मय का इतिहास- आचार्य बलदेव उपाध्याय

97- वैदिक माइथोलाजी - मैकडानल

98- स्फोटथ्यारी आफ लैंग्वेज- मोतीलाल बनारसीदास- 1980
-हैरोल्ड जी कार्वड

99- ए स्टडी इन दि डाइलेक्टिक्स आफ स्फोट 1980

100-दि जर्नल आफ गंगानाथझा रिसर्च इन्स्टीट्यूट, इलाहाबाद